# आश्वलायनगृह्यसूत्रम्।

आश्वलायनप्रणीतम्।

गार्ग्यनारायणीयवृत्तिसहितम्।

पण्डितकुलपतिना

बि, ए उपाधिधारिणा

श्रीजीवानन्दविद्यासागरभट्टाचार्य्येण

संस्कृतं प्रकाशितञ्च।

द्वितीयसंस्करणम्।




कलिकातानगरे

सरस्वतीयन्त्रे

मुद्रितम्।

इं १८९३

# आश्वलायनीयगृह्यसूत्राणां सूचीपत्रम् ।

——:०:०:——

प्रथमोऽध्याये

कण्डिकाः १—२४ । स्थालीपाकाद्युपाकर्मान्तानि कर्माणि ।

अथ प्रथमाध्याये प्रथमा कण्डिका ।

सूत्रम् ।

१ गृह्यव्याख्यानप्रतिज्ञानम् ।

२ पाकयज्ञप्रकारकथनम् ।

३ पाकयज्ञप्रकारस्य त्रैविध्योपदेशः ।

४ एतान्यपि कर्माणि नित्यानि श्रौतैस्तुल्यानि आहिताग्नेरपि स्युः ।

५ पाकयज्ञानामर्थवादरूपं ब्राह्मणम् ।

इति प्रथमे प्रथमा कण्डिका ।

---

अथ प्रथमे द्वितीया कण्डिका ।

१ सायम्प्रातःपक्वहविष्यहोमः ।

२ देवयज्ञकथनम् ।

३ स्वाहाकारेण बलिहरणम् ।

४ बलिप्रदानार्हदेवतानिर्णयः ।

सूत्रम् ।

५ दिक्षु देवताभ्यो देवतापुरुषेभ्यो बलिहरणम् ।

६ मध्ये ब्राह्मणे ब्रह्मपुरुषेभ्यो बलिहरणम् ।

७ मध्ये विश्वेभ्यो देवेभ्यो बलिहरणम् ।

८ मध्ये, दिवसे, दिवाचारिभ्यो भूतेभ्यो बलिहरणम् ।

९ रात्रौ, नक्तञ्चारिभ्यो भूतेभ्यो बलिहरणम् ।

१० सर्वशेषे रक्षोभ्यो बलिहरणम् ।

११ पितृयज्ञे प्राचीनावीती अन्यत्र निनयादिषु दक्षिणावीती ।

इति प्रथमे द्वितीया कण्डिका ।

---

अथ प्रथमे तृतीया कण्डिका ।

१ वक्ष्यमाणकर्मणां होमविधिः

२ पवित्राभ्यामाज्यस्योत्पवनम् ।

३ पवित्रलक्षणोत्पवनयोर्निर्णयः

सूत्रम्।

५ उभयकामिना अङ्गुष्ठाङ्गुलिसहितहस्तग्रहणम्।

६ अग्न्युदककुम्भप्रदक्षिणे वधूजपमन्त्रः।

७ अश्मारोहणे आचार्य्य जपमन्त्रः।

८ लाजहोमप्रकारः। भ्रातादिर्हि लाजानावपति।

९ वरो जामदग्न्यश्चेत् त्रिर्लाजानावपति।

१० लाजायां हविरवधारणम्।

११ वरकर्त्तृकमवदानम्।

१२ अवदानमेवं सर्वत्र।

१३ वरकर्त्तृकहोममन्त्राः।

१४ अमन्त्रकं शूर्पपुटेन वधूकर्त्तृकं लाजादानम्।

१५ एके लाजानोप्य पश्चात्परिणयन्ति।

१६ शिखाविमुच्चनम्।

१७ दक्षिणाशिखां विमुच्चति।

१८ उत्तराशिखां विमुच्चति।

१९ सप्तपदीगमनम्।

२० उभयोः शिरसि उदकुम्भसेचनम्।

२१ ग्रामान्तरगमने अन्तरावसतिः।

२२ ध्रुवारुन्धत्यादि दृष्ट्वावाग्विसर्जनम्।

इति प्रथमे सप्तमी कण्डिका।

---

अथ प्रथमे अष्टमी कण्डिका।

सूत्रम्।

१ यानारोहणमन्त्रः।

२ नावारोहणमन्त्रः।

३ उदकादुत्तारणमन्त्रः।

४ वधूर्यदि रोदिति तदा एतां जपेत्।

५ विवाहाग्निं गृहीत्वा गन्तव्यम्।

६ देशवृक्षचतुष्पथादौ जपमन्त्रः।

७ पथिका ईक्षकाः सन्ति चेत् तानेतया ईक्षेत।

८ गृहप्रवेशमन्त्रः।

९ उपवेशनदधिप्राशनहृदयाञ्जनादयः।

१० विवाहावधि ब्रह्मचर्य्यधारणादिः।

११ त्रिरात्रं द्वादशरात्रं वा ब्रह्मचर्य्यधारणम्।

१२ संवत्सरं वा ब्रह्मचर्य्य-

त्रम्।

२४ पूर्णपात्रनिनयनकालः।

२५ पाकयज्ञतन्त्रः।

२६ दक्षिणादानम्।

इति प्रथमे दशमी कण्डिका।

---

अथ प्रथमे एकादशी कण्डिका

१ पशुकल्पः।

२ पशूपस्पर्शनम्।

३ पशुप्रोक्षणम्।

४ पशुनिनयनम्।

५ पशुनिनयनं मन्त्रवर्जम्।

६ उल्मुकाहरणम्।

७ शामित्रकथनम्।

८ पश्वन्वारम्भणम्।

९ अन्वारम्भकर्तृकथनम्।

१० वपाहोमः।

११ स्थालीपाकश्रपणम्।

१२ पश्ववदानं स्थालीपाकहोमश्च।

१३ अवदानसहितहोमो वा।

१४ प्रत्येकावदाने द्विर्द्विरवदानम्।

१५ तूष्णीं हृदयशूलाचरणम्।

इति प्रथमे एकादशी कण्डिका।

अथ प्रथमे द्वादशी कण्डिका।

सूत्रम्।

१ चैत्ययज्ञे स्विष्टकृतः प्राक् बलिहरणम्।

२ विदेशस्थचैत्यपक्षे पलाशदूतेन बलिहरणम्।

३ भयसम्भावनायां दूताय शस्त्रदानम्।

४ नद्यन्तरा चेत् प्लवरूपदानम्।

५ धन्वन्तरिश्चैत्यश्चेत् पुरोहिताय बलिहरणम्।

इति प्रथमे द्वादशी कण्डिका।

---

अथ प्रथमे त्रयोदशी कण्डिका

१ पुंसवनं, अनवलोभनञ्च।

२ पुंसवनं कर्म।

३ प्रश्नवचनम्।

४ त्रिः प्राशनम्।

५ अनवलोभनं कर्म।

६ नस्तःकरणम्।

७ हृदयस्पर्शमन्त्रः।

इति प्रथमे त्रयोदशी कण्डिका

---

अथ प्रथमे चतुर्दशी कण्डिका।

१ सीमन्तोन्नयनं कर्म।

सूत्रम्।
२ तस्य कालनिर्णयः।
३ होममन्त्रः।
४ सीमन्तव्यूहनम्।
५ चतुर्वा व्यूहति।
६ वीणागाथकप्रेषणम्।
७ गेयगाथाकथनम्।
८ ब्राह्मण्यो यद् ब्रूयुस्तदाचरणम्।
९ दक्षिणादानम्।
इति प्रथमे चतुर्दशी कण्डिका

---

अथ प्रथमे पञ्चदशी कण्डिका
१ जातकर्म।
२ मेधाजननजपः।
३ अंसस्पर्शनम्।
४ नामकरणम्।
५ नामलक्षणम्।
६ चतुरक्षरं वा नाम।
७ नाम्नि कामनानिर्णयः।
८ पुंनामधेयानि युग्माक्षराणि।
९ स्त्रीनामधेयानि अयुग्माक्षराणि।
१० येन नाम्ना उपनीतः अभिवादयते तत् कुर्य्यात्।

सूत्रम्।
११ मूर्द्धावघ्राणजपः।
१२ कुमार्य्या अमन्त्रकं कर्म।
इति प्रथमे पञ्चदशी कण्डिका

---

अथ प्रथमे षोड़शी कण्डिका।
१ अन्नप्राशनम्।
२ अजमांसान्नाशनम्।
३ तित्तिरिमांसान्नाशनम्।
४ घृतौदनान्नाशनम्।
५ अन्नाशनमन्त्रः।
६ कुमार्य्या अमन्त्रकम्।
इति प्रथमे षोड़शी कण्डिका।

---

अथ प्रथमे सप्तदशी कण्डिका।
१ चौलं कर्म।
२ पूर्णपात्राधानम्।
३ कुमारावस्थानं द्रव्यासादनञ्च।
४ कुशपिञ्जूलहस्तकुमारपित्रवस्थानम्।
५ ब्रह्मा वा कुशपिञ्जूलानि धारयेत्।
६ अप्निनयनमन्त्रः।
७ शिरउन्दनमन्त्रः।
८ कुशपिञ्जूलनिधानमन्त्रः।

सूत्रम् ।

९ तेषु ताम्रक्षुरस्थापनम् ।

१० केशच्छेदनमन्त्रः ।

११ केशस्थापनम् ।

१२ द्वितीयस्य तृतीयस्य मन्त्रौ

१३ चतुर्थस्य मन्त्रः ।

१४ एवमुत्तरतः ।

१५ क्षुरधारशोधनमन्त्रः ।

१६ नापितानुशासनम् ।

१७ केशसन्निवेशकरणम् ।

१८ कुमार्य्या अमन्त्रकम् ।

इति प्रथमे सप्तदशी कण्डिका

———

अथ प्रथमे अष्टादशी कण्डिका

१ गोदानं कर्म ।

२ तत्र कालनिर्णयः ।

३ मन्त्रे केशशब्देषु श्मश्रुशब्द-करणम् ।

४ श्मश्रुवपनम् ।

५ क्षुरधारशोधने विशेषमन्त्रः

६ नापितानुशासनम् ।

७ आचार्य्याय दानप्रार्थना ।

८ दक्षिणादानम् ।

९ संवत्सरव्रताचरणादेशः ।

इति प्रथमे अष्टादशी कण्डिका

अथ प्रथमे एकोनविंशतितमा कण्डिका ।

सूत्रम् ।

१ उपनयनम् । अष्टमे वर्षे ब्राह्मणस्य ।

२ गर्भाष्टमे वर्षे वा ।

३ एकादशे वर्षे क्षत्रियस्य ।

४ द्वादशे वैश्यस्य ।

५ आषोडशात् ब्राह्मणस्य नातीतः कालः ।

६ आद्वाविंशात् क्षत्रियस्य, आचतुर्विंशात् वैश्यस्य ।

७ अत ऊर्द्धं अचीर्णप्रायश्चित्तान् नाध्यापयेत् ।

८ सवोतचर्मनिर्णयः ।

९ परिधेयवासोनिर्णयः ।

१० मेखलाधिकारः ।

११ मेखलानिर्णयः ।

१२ दण्डाधिकारः ।

१३ दण्डनिर्णयो दण्डपरिमाणञ्च ।

इति प्रथमे एकोनविंशतितमा कण्डिका ।

———

अथ प्रथमे विंशतितमा कण्डिका ।

इति प्रथमे द्वाविंशतितमा कण्डिका ।

---

अथ प्रथमे त्रयोविंशतितमा कण्डिका ।



इति प्रथमे त्रयोविंशतितमा कण्डिका ।

---

अथ प्रथमे चतुर्विंशतितमा कण्डिका ।

सूत्रम् ।
८ आसनग्रहीतुः कर्म ।
९ पादप्रक्षालननियमः ।
१० वामपादप्रक्षालनम् ।
११ अर्घ्यग्रहणम् ।
१२ अर्घ्यग्रहणमन्त्रः ।
१३ मधुपर्केक्षणमन्त्रः ।
१४ मधुपर्कग्रहणादिमन्त्राः ।
१५ निरुक्षरणम् ।
१६ मधुपर्कभोजनम् ।
१७ सर्वभक्षणनिषेधः ।
१८ तृप्तिनिषेधः ।
१९ अवशिष्टमधुपर्कप्रक्षेपः ।
२० सर्वभक्षणं वा ।
२१ आचमनम् ।
२२ द्वितीयाचमनम् ।
२३ आचान्तोदकाय गोदानम् ।
२४ आलम्भनसत्त्वे जपोऽनुज्ञा च ।
२५ उत्सर्गसत्त्वे उत्सर्गश्च ।
२६ मधुपर्काङ्गं भोजनं अमांसं न भवति ।

इति प्रथमे चतुर्विंशतितमा कण्डिका ।

इति प्रथमाध्यायसूची समाप्ता

अस्मिन्नध्याये सूत्रसंख्या २९९

---

द्वितीयाध्याये

कण्डिका १—१० । श्रवणाकर्मादि आयतीयकर्मान्तानि कर्माणि ।

अथ द्वितीयाध्याये प्रथमा कण्डिका ।

सूत्रम् ।
१ श्रवणाकर्मकालनियमः ।
२ सक्तुकलशदर्वीस्थापनम् ।
३ दिवाकार्य्यम् ।
४ अस्तमिते स्थालीपाकहोमः
५ अवस्थाननियमः ।
६ पुरोडाशोपरिहोमः ।
७ धानाञ्जलिहोमः ।
८ हुतशेषसमापनम् ।
९ सर्पबलिहरणम् ।
१० प्रदक्षिणोपवेशने, परिदानमन्त्रश्च ।
११ अमात्याय परिदानम् ।
१२ परिदानान्तरम् ।
१३ बालमन्तरा न व्यवेयुः ।
१४ सायम्प्रातर्बलिहरणम् ।
१५ प्रकारान्तरबलिहरणम् ।

इति द्वितीये प्रथमा कण्डिका

अथ द्वितीये द्वितीया कण्डिका।

सूत्रम्।

१ आश्वयुजीकर्म।

२ स्थालीपाकहोमः।

३ पृषातकहोमः।

४ आहिताग्नेः आग्रहायणः स्थालीपाकः।

५ अनाहिताग्नेर्विशेषः।

इति द्वितीये द्वितीया कण्डिका।

---

अथ द्वितीये तृतीया कण्डिका।

१ प्रत्यवरोहणकर्मकालः।

२ पौर्णमास्यां वा।

३ पायसहोममन्त्रौ।

४ स्विष्टकृन्निषेधः।

५ जपमन्त्रः।

६ पुनर्जपमन्त्रः।

७ अमात्यप्रवेशः।

८ ज्यायान् ज्यायान् वा प्रविशति।

९ मन्त्रविदो मन्त्रजपः।

१० उत्थाय विजपमन्त्रः।

११ विदिङ्मुखानां चतुर्थः जपमन्त्रः।

सूत्रम्।

१२ स्वस्त्ययनवाचनम्।

इति द्वितीये तृतीया कण्डिका

---

अथ द्वितीये चतुर्थी कण्डिका।

१ अष्टकाकर्मकालः।

२ एकस्यां अष्टम्यां वा।

३ पूर्वदिवसे सप्तम्यां पितृभ्यो दानम्।

४ ओदनकृसरपायसानां श्रपणम्।

५ चतुःशरावपरिमितधान्यं पिष्ट्वा पूपश्रपणम्।

६ मन्त्राष्टकैर्होमः, यावद्भिः कामयेत् तावद्भिर्वा।

७ परदिने अष्टम्यां अष्टका, पशुना स्थालीपाकेन वा।

८ अनडुहो यवसमाहरेद्वा।

९ त्रयाणामप्यसम्भवे अग्निना कक्षं दहेत्।

१० पूर्वोक्तपञ्चहये मनसा ध्यानम्।

११ चतुर्णामेकस्याप्यनुष्ठाने नानष्टकः स्यात्।

१२ देवताविकल्पप्रदर्शनम्।

१३ वपाहोममन्त्रः।

सूत्रम्।

१४ सप्त होममन्त्राः।

१५ स्विष्टकृति अष्टमहोमः।

१६ स्वस्त्ययनवाचनम्।

इति द्वितीये चतुर्थी काण्डिका।

---

अथ द्वितीये पञ्चमी काण्डिका।

१ अन्वष्टक्यं कर्म।

२ मांसकल्पादि।

३ पिण्डपितृयज्ञकल्पत्वप्रदर्शनम्।

४ पितृभ्यः पिण्डनिपरणम्।

५ मातृपितामहीप्रपितामहीभ्यः पिण्डनिपरणम्।

६ अवटसंख्यानिर्णयः।

७ पित्रादिपिण्डस्थानम्।

८ मात्रादिपिण्डस्थानम्।

९ एतेन माध्यावर्षं कर्म व्याख्यातम्।

१० माध्यावर्षकर्मणि मासि मासि पितृभ्य एव श्राद्धम् कर्त्तव्यम्।

११ अन्वष्टक्ये नवावरान् भोजयेत्।

१२ अशक्तौ सप्त पञ्च त्रीन् एकं वा।

सूत्रम्।

१३ वृद्धिकर्मणि पूर्त्तकर्मणि च युग्मान् भोजयेत्।

१४ पूर्वद्युः अष्टम्यां काम्ये एकोद्दिष्टे च अयुग्मान्।

१५ वृद्धिपूर्त्तेषु दक्षिणावीतिः तिलकार्य्यं यवदानञ्च।

इति द्वितीये पञ्चमी काण्डिका।

---

अथ द्वितीये षष्ठी काण्डिका।

१ रथारोहणात् पूर्वं तत्स्पर्शनमन्त्रः।

२ अश्वस्पर्शनमन्त्रः।

३ आरोहणक्रमस्तन्मन्त्रश्च।

४ रश्मिस्पर्शनमन्त्रः।

५ गमनप्रवर्त्तमानेषु रथेषु जपमन्त्रः।

६ शकटाद्यारोहणेऽप्ययं मन्त्रः।

७ शकटाद्यङ्गस्पर्शनमन्त्रः।

८ नावारोहणमन्त्रः।

९ नवरथेऽयं विशेषः।

१० कुटुम्बोपयोगिद्रव्याहरणम्।

११ गृहसमीपागमनम्।

१२ रथावरोहणमन्त्रः।

१३ नवरथावरोहणमन्त्रः।

१४ जपमन्त्रः।

अथ तृतीये चतुर्थी
कण्डिका ।

सूत्रम् ।

१ देवतर्पणम् ।
२ ऋषितर्पणम् ।
३ प्राचीनावीती ।
४ आचार्य्यतर्पणम् ।
५ पितृतर्पणं दक्षिणा च ।
६ तिथिविशेषादौ निषेधवचनं नित्यस्वाध्यायस्यैव, न ब्रह्मयज्ञस्य ।
७ ब्रह्मयज्ञानध्यायः ।

इति तृतीये चतुर्थी
कण्डिका ।

---

अथ तृतीये पञ्चमी
कण्डिका ।

१ अध्ययनप्रारम्भः ।
२ अध्ययनकालनियमः ।
३ अध्ययनतिथिनियमः ।
४ आज्यभागाहुतिः ।
५ दधिसक्तुहोमः ।
६ होममन्त्रः ।
७ अन्ये मन्त्राः ।
८ एको मन्त्रः ।
९ अपर एको मन्त्रः ।

सूत्रम् ।

१० देवताहोमादिमार्जनम् ।
११ जपनियमः ।
१२ व्याहृतिसावित्रीजपो वेदारम्भश्च ।
१३ उत्सर्गविधिः ।
१४ अध्ययनकालनिर्देशः ।
१५ ब्रह्मचारिधर्मयुक्तोऽधीयीत ।
१६ ब्रह्मचारिणामपि अध्ययनम् ।
१७ समावृत्तो जाया गच्छेदित्येके ।
१८ प्रजोत्पत्त्यर्थं जायागमनम् ।
१९ कृत्युपाकरणम् ।
२० षण्मासान्ताष्टकादि ।
२१ सावित्र्यादितर्पणम् ।
२२ आचार्य्यादितर्पणम् ।
२३ एतदुत्सर्जनम् ।

इति तृतीये पञ्चमी कण्डिका ।

---

अथ तृतीये षष्ठी कण्डिका ।

१ काम्यकर्मस्थाने पाकयज्ञः ।
२ पुरोडाशस्थाने चरुः ।
३ कामप्राप्तिफलम् ।

सूत्रम् ।
४ नैमित्तिकहोमः ।
५ होममन्त्रः ।
६ अशुभस्वप्रदर्शने उपस्थान-मन्त्रः ।
७ तत्र मन्त्रान्तरम् ।
८ जृम्भणादौ जपमन्त्रः ।
९ अगमनीयगमनादौ आज्य-होमः ।
१० तत्र समिदाधानं वा ।
११ तत्र मन्त्रजपो वा ।
इति तृतीये षष्ठी कण्डिका ।

---

अथ तृतीये सप्तमी कण्डिका ।
१ आदित्योपस्थानमन्त्रः ।
२ तत्र मन्त्रचतुष्टयम् ।
३ सन्ध्योपासनम् ।
४ तत्र सायङ्काले कर्त्तव्यनि-यमः ।
५ तत्र प्रातर्नियमः ।
६ तत्र कालनिर्णयः ।
७ कपोतपाते होमजपौ ।
८ अर्थार्थं गच्छन् होमजपौ ।
९ नष्टं वस्तु लब्धमिच्छन् होमजपौ ।
१० महान्तमध्वानं गमिष्यन्

सूत्रम् ।
होमजपौ ।
इति तृतीये सप्तमी कण्डिका ।

— —

अथ तृतीये अष्टमी कण्डिका ।
१ समावर्त्तनं करिष्यमाणस्य आत्मने आचार्य्यार्थञ्च दान-द्रव्यनिर्णयः ।
२ उभयोर्दानद्रव्यालाभे आ-चार्य्यायैव दानम् ।
३ समिदाहरणनियमः ।
४ कामनाविशेषे समिन्नि-र्णयः ।
५ उभयोमुभयकामः ।
६ समिधदानादिगोदानम् ।
७ मन्त्रान् आत्मवाचकान् कुर्य्यात् ।
८ मर्दननियमः ।
९ स्नानाञ्जननियमः ।
१० कुण्डलबन्धनम् ।
११ अनुलेपननियमः ।
१२ स्रग्बन्धनम् ।
१३ तत्रान्यनियमः ।
१४ छत्रादानम् ।
१५ वैणवदण्डदानम् ।
१६ मण्युष्णीषसमिधादानम् ।

इति तृतीये अष्टमी कण्डिका।

---

अथ तृतीये नवमी कण्डिका।

सूत्रम्।

१ उपदेशमन्त्रः।

२ प्रत्यृचं समिधादानम्।

३ मधुपर्कपूजनम्।

४ अनुज्ञाते समावर्त्तनस्नानम्।

५ व्रतनियमः।

६ निषेधनियमः।

७ निषेधनियमान्तरम्।

८ स्नातकस्य माहात्म्यम्।

इति तृतीये नवमी कण्डिका।

---

अथ तृतीये दशमी कण्डिका।

१ गुरवे नामकथनम्।

२ उपवेशनानुज्ञा।

३ उच्चैर्नामकथनम्।

४ उपांशुकथनमन्त्रः।

५ शिष्यस्य उपांशुकथनमन्त्रः।

६ आचार्य्य जपमन्त्रः।

७ उपानन्तरम् अनुमन्त्रणम्।

८ प्रशंसा।

९ पक्षिणाम् भीममनोज्ञा वचः सूत्रम्।

श्रुत्वा जपमन्त्रः।

१० मृगस्यामनोज्ञा वचः श्रुत्वा जपमन्त्रः।

११ भयप्राप्तौ जपमन्त्रः।

इति तृतीये दशमी कण्डिका।

---

अथ तृतीये एकादशी कण्डिका।

१ सर्वाभ्यो दिग्भ्यो भयप्राप्तौ जपमन्त्रो होमश्च।

२ जपमन्त्रः सूक्तशेषश्च।

इति तृतीये एकादशी कण्डिका।

---

अथ तृतीये द्वादशी कण्डिका।

१ राजसन्नाहनम्।

२ तत्र जपमन्त्रः।

३ राज्ञे कवचदानमन्त्रः।

४ धनुर्दानमन्त्रः।

५ राज्ञो जपमन्त्रः।

६ स्त्रीयजपमन्त्रः।

७ इषुधिदानमन्त्रः।

८ रथगमने जपमन्त्रः।

९ अश्वानुमन्त्रणम्।

सूत्रम् ।

१० पुनर्वेक्ष्यमाणजपमन्त्रः ।

११ तत्र नह्यमानराजजपमन्त्रः

१२ सारयमाणे जपमन्त्रः ।

१३ राजेक्षणमन्त्रः ।

१४ सौपर्णमन्त्रः ।

१५ अनुक्रमेण पथगमनम् ।

१६ युद्धप्रदेशनियमः ।

१७ दुन्दुभिवादनमन्त्रः ।

१८ बाणत्यागमन्त्रः ।

१९ युद्धमाने राजनि पुरोहितजपमन्त्रः ।

२० तत्र पुनर्मन्त्रः ।

इति तृतीये द्वादशी कण्डिका ।

इति तृतीयाध्यायसूची समाप्ता ॥

अस्मिन्नध्याये सूत्रसंख्या १२० ।

---

चतुर्थाध्याये

कण्डिका १—९ । आहिताग्नेः पीड़ाप्रशमनादि सजातीयजपान्तानि कर्माणि ।

---

अथ चतुर्थाध्याये प्रथमा कण्डिका ।

सूत्रम् ।

१ व्याधिपीड़ितस्याहिताग्नेः कर्त्तव्यम् ।

२ ग्रामकामत्वे प्रमाणम् ।

३ ग्रामे वास्तव्यत्वे प्रमाणम् ।

४ अगदः सोमादिभिरिष्ट्वा ग्रामं प्रविशेत् ।

५ अनिष्ट्वा वा ग्रामं प्रविशेत् ।

६ मृतस्याहिताग्नेश्चिताभूमिखननम् ।

७ खातस्य निम्नोच्चनियमः ।

८ खातस्य आयामनियमः ।

९ खातस्य विस्तृतिनियमः ।

१० खातस्य अधोनियमः ।

११ श्मशानदेशनिरूपणम् ।

१२ तत् स्थानं बहुलौषधिकं भवेत् ।

१३ कण्टकिक्षीर्याद्युद्वासनम् ।

१४ दहनलक्षणश्मशानस्य विशेषविधिः ।

१५ प्रेतस्य केशादिवपनम् ।

१६ बहिराज्यादिसंस्थानम् ।

१७ पृषदाज्यकथनम् ।

इति चतुर्थे प्रथमा कण्डिका ।

अथ चतुर्थे द्वितीया कण्डिका ।

सूत्रम् ।

१ अग्नियज्ञपात्राद्यानयनम् ।

२ प्रेतानयननियमः ।

३ शकटादिना प्रेतानयनमित्येके ।

४ अनुस्तरणीपशुकथनम् ।

५ तत्र पशुविशेषः ।

६ अजापशुवर्णनियमः ।

७ कृष्णं पशुमित्येके ।

८ पशोः सव्यबाहुबन्धनं कृत्वा आनयनम् ।

९ तदनु अमात्यानामागमनम् ।

१० कर्त्तुः कर्त्तव्यनियमः ।

११ आहवनीयाधानम् ।

१२ गार्हपत्याधानम् ।

१३ दक्षिणाग्न्याधानम् ।

१४ चिताग्निचयनम् ।

१५ चितायां प्रेतसंवेशनम् ।

१६ प्रेतपत्नीसंवेशनम् ।

१७ क्षत्रियमेतस्य धनुःसंवेशनम् ।

१८ पत्न्या उत्थापनम् ।

१९ कर्त्तृजपमन्त्रः ।

२० धनुरपनयनमन्त्रः ।

सूत्रम् ।

२१ पुनः कर्त्तृजपः ।

२२ धनुःक्षेपः ।

इति चतुर्थे द्वितीया कण्डिका ।

---

अथ चतुर्थे तृतीया कण्डिका ।

१ पात्रयोजनम् ।

२ जुह्वामयनम् ।

३ उपभृतानयनम् ।

४ अग्निहोत्रहवनादि आनयनम् ।

५ स्थानविशेषे द्रव्यविशेषाधानम् ।

६ नासिकायां स्रुवाधानम् ।

७ एकश्चेत् स्रुवं भित्त्वा नासिकाद्वये योजनम् ।

८ कर्णे द्रव्यविशेषाधानम् ।

९ एकश्चेत् भित्त्वा इति पूर्ववत् ।

१० उदरे द्रव्यविशेषाधानम् ।

११ उदरे समवत्तधानायोजनम् ।

१२ उपस्थे द्रव्यविशेषाधानम् ।

१३ ऊरुजङ्घयोर्द्रव्यविशेषाधानम् ।

सूत्रम्।

१४ पादद्वये द्रव्यविशेषाधानम्।

१५ एकधेत् छित्त्वा इति पूर्ववत्।

१६ आसेचनपात्रे पृषदाज्यपूरणम्।

१७ उपयोगद्रव्याधानम्।

१८ आयुधायोजनम्।

१९ प्रेतस्य शिरोमुखाच्छादनमन्त्रः।

२० प्रेतपाणौ वृक्काधानम्।

२१ हृदये हृदयाधानम्।

२२ प्रेतपाणौ पिण्डाधानमित्येके।

२३ वृक्काभावे पिण्डाधानमित्येके।

२४ प्रणीताप्रणयनानुमन्त्रणम्।

२५ दक्षिणाग्नौ आज्याहुतिहोमः।

२६ प्रेतस्योरसि पञ्चमाहुतिमन्त्रः।

इति चतुर्थे तृतीया कण्डिका।

---

अथ चतुर्थे चतुर्थी कण्डिका।

१ युगपदग्निप्रज्वालनम्।

सूत्रम्।

२ अनुष्ठितस्य कर्मणः फलविज्ञापनम्।

३ प्रकारान्तरस्य फलविज्ञापनम्।

४ अन्यप्रकारस्य फलविज्ञापनम्।

५ युगपत्प्राप्तौ फलविज्ञापनम्।

६ दहनमन्त्रः।

७ दहनप्रशंसा।

८ आतिवाहिकशरीरमास्थाय धूमेन सह स्वर्गलोकगमनम्।

९ कर्त्तृजपमन्त्रः पृष्ठतोऽनीक्षित्वा सर्वेषां गमनञ्च।

१० सकृत् स्नात्वा प्रेताय जलाञ्जलिं दत्त्वान्यानि वासांसि परिधाय आनक्षत्रदर्शनात् तत्रावस्थानम्।

११ आदित्यमण्डलं वा दृष्ट्वा गृहं प्रविशेत्।

१२ प्रवेशे पूर्वापरनियमः।

१३ गृहमागत्य अश्मादीनुपस्पृशन्ति।

१४ तस्मिन् दिने अन्नं न रचेरन्।

१५ क्रीतान्नेन वर्त्तेरन्।

सूत्रम् ।
१६ त्रिरात्रमक्षारलवणम् ।
१७ द्वादशरात्रं दानाध्ययनवर्जं महागुरुमृते ।
१८ सपिण्डे दशाहम् ।
१९ उपनेतृगुरौ असपिण्डेऽपि दशाहं द्वादशाहं वा ।
२० अदत्तासु स्त्रीषु मृतासु दशाहम् ।
२१ एकदेशाध्यापकेषु त्रिरात्रम् ।
२२ असपिण्डज्ञातौ त्रिरात्रम् ।
२३ दत्तासु स्त्रीषु त्रिरात्रम् ।
२४ अदन्तजाते त्रिरात्रम् ।
२५ असम्पूर्णगर्भे त्रिरात्रम् ।
२६ सहाध्यायिषु मृतेषु एकाहम् ।
२७ समानग्रामीये श्रोत्रिये एकाहम् ।
इति चतुर्थे चतुर्थी कण्डिका ।

---

अथ चतुर्थे पञ्चमी कण्डिका ।
१ अस्थिसञ्चयनम् ।
२ स्त्रीपुरुषभेदेन कुम्भनियमः ।

सूत्रम् ।
३ प्रोक्षणमन्त्रः ।
४ सञ्चयने पूर्वापरनियमः ।
५ सञ्चयनानन्तरं अवधाननियमः ।
६ पांसुप्रक्षेपः ।
७ प्रक्षेपानन्तरं उत्तराजपमन्त्रः ।
८ कपालेन सञ्चयनाधारकुम्भापिधानम् ।
इति चतुर्थे पञ्चमी कण्डिका ।

---

अथ चतुर्थे षष्ठी कण्डिका ।
१ शान्तिकर्म ।
२ अग्निहरणम् ।
३ चतुष्पथे अग्निपरिगमनम् ।
४ अग्न्यनवेक्षणादिकुशपिञ्जूलान्तम् ।
५ अग्निजननम् ।
६ अग्निदीपनम् ।
७ अग्निसिञ्चनम् ।
८ अनडुच्चर्मण्यमात्यारोहणम् ।
९ परिधिपरिधानम् ।
१० आहुतिचतुष्टयमन्त्रः ।
११ चक्षुषी आञ्जीरन् ।
१२ कर्त्तुरीक्षणम् ।

सूत्रम्।

१३ अश्माभिमर्षणम्।

१४ परिक्रमणजपः

१५ स्विष्टकृदादिसमापनम्।

१६ अथोपवेशनम्।

१७ आ उदयादस्वपन्त आसते।

१८ होमसमापनम्।

इति चतुर्थे षष्ठी कण्डिका।

---

अथ चतुर्थे सप्तमी कण्डिका।

१ श्राद्धाधिकारः।

२ ब्राह्मणनियमः।

३ ब्राह्मणसंख्याकथनम्।

४ पिण्डपितृयज्ञे उक्ताः पिण्डनिपरणादयः श्राद्धेऽपि ज्ञेयाः।

५ ब्राह्मणाय जलदानम्।

६ आसनदानम्।

७ पुनर्जलदानम्।

८ पात्रे तिलावपनम्।

९ पित्र्यं कर्म अप्रदक्षिणं कार्य्यमिति।

१० अर्घ्यदानम्।

११ अर्घ्यदानात् पूर्वं जलदानम्।

सूत्रम्।

१२ अर्घ्यापां निवेदनम्।

१३ अर्घ्यानुमन्त्रणम्।

१४ अर्घ्या आपो यस्मिन् पात्रे एकीकृताः तत् प्रथमपात्रं नोद्धरेत्।

इति चतुर्थे सप्तमी कण्डिका।

---

अथ चतुर्थे अष्टमी कण्डिका।

१ गन्धादिदानम्।

२ अग्नौ करणानुज्ञा।

३ प्रत्यनुज्ञा।

४ अग्नौ करणहोमः।

५ पाणिष्वेव वा होमः।

६ देवपितॄणाम् अग्निमुखपाणिमुखत्वे प्रमाणम्।

७ भोजनपात्रेऽन्नदानविधानम्।

८ हुतशेषान्नदानम्।

९ भोजनपात्रे अधिकान्नदानम्।

१० भोजनात् तृप्तेषु पाठमन्त्रः।

११ पिण्डार्थमन्नमुद्धृत्य शेषनिवेदनम्।

सूत्रम्।

१२ अनाचान्तेषु पिण्डनिपरणम्।

१३ आचान्तेषु तदित्येके।

१४ ब्राह्मणानुज्ञानम्।

१५ अस्तु स्वधेति प्रत्यनुज्ञानम्

इति चतुर्थे अष्टमी कण्डिका।

---

अथ चतुर्थे नवमी कण्डिका।

१ अथ शूलगवः।

२ तस्य कालादिनियमः।

३ पशुनिरूपणम्।

४ पशुलक्षणम्।

५ कृष्णविन्दुयुक्तपशुरित्येके।

६ आलोहवांश्चेत् कामं कृष्णं गृह्णीयात्।

७ पश्वभिषेकः।

८ शिर आरभ्य पुच्छदेशपर्य्यन्तम्।

९ पशूत्सर्गः।

१० पशोर्द्विपय्यन्तं पालनम्।

११ तत्र देशनियमः।

१२ यत्रस्थो ग्रामं न पश्यति तत्र देशे।

१३ तत्र कालनियमः।

सूत्रम्।

१४ यूपनिखननं तत्र पशुबन्धश्च।

१५ प्रोक्षणादिपशुकल्पेन समानम्।

१६ वपाहोमः।

१७ होममन्त्रः द्वादशनामकः।

१८ षट् नामको वा मन्त्रः।

१९ एकनामको वा मन्त्रः।

२० बालहरणम्।

२१ दिगुपस्थानम्।

२२ सर्वरुद्रयज्ञेष्वेवम्।

२३ स्थालीपाकव्रीहीनां फलीकरणम्।

२४ मांवत्समते विशेषः।

२५ अङ्गावदानसमये शोणितनिनयनम्।

२६ संज्ञपनदेशे भूमौ निपतितं रुधिरं सर्पेभ्य उद्दिशति।

२७ सर्वाणि रुद्रस्य नामधेयानि।

२८ सर्वा अस्यैव सेनाः।

२९ सर्वाण्युत्सृष्टान्यस्यैव।

३० यजमानं प्रीणाति।

३१ अस्य कर्मणो व्रताणं रुद्रो

सूत्रम्।

न हिनस्ति।

३२ अस्य हुतशेषं न प्राश्नीयात्।

३३ अस्य द्रव्याणि ग्रामं नाहरेयुः।

३४ नात्रागन्तव्यमिति पुत्रादीन् प्रतिषेधयेत्।

३५ नियमेन हुतशेषं प्राश्नीयात्।

३६ शूलगवस्य फलश्रवणम्।

३७ शूलगवेनेष्ट्वा अन्यं पशुमुत्सृजेत्।

३८ अनुत्सृष्टो नैव स्यात्।

३९ शूलगवनामकेन पशुकर्मणा रहितो न भवेत्।

सूत्रम्।

४० शम्नातीयं जपन् गृहप्रवेशः।

४१ पशूपतापे गोष्ठे यजनम्।

४२ स्थालीपाकं निधाय सर्वहुतं कुर्य्यात्।

४३ प्रतिधूमं गवानयनम्।

४४ शम्नातीयं जपन् पशूनां मध्यमियात्।

४५ समाप्तिज्ञापनार्थं आचार्य्यनमस्कारः।

इति चतुर्थे नवमी कण्डिका।

इति चतुर्थाध्यायसूची समाप्ता॥

अस्मिन्नध्याये सूत्रसंख्या १८२।

—:—

इति चतुर्थोध्यायः समाप्तः।

# परिशिष्टभागसूचीप्रारम्भः।



इति द्वितीयोऽध्यायः ।

---

अथ तृतीयोऽध्यायः ।

कण्डिका१—१८ पितृमेधादि वृषोत्सर्गान्तानि कर्माणि ।

---



इति तृतीयोऽध्यायः ।

---

अथ चतुर्थोऽध्यायः ।

कण्डिका १—२२ पूर्त्तकर्मादि अग्निकार्य्यान्तानि कर्माणि ।

इति परिशिष्टसूची समाप्ता

# आश्वलायनगृह्यसूत्रम् ।

## प्रथमोऽध्यायः ।

### अथ प्रथमा कण्डिका ।

उक्तानि वैतानिकानि गृह्याणि वक्ष्यामः ॥ १ ॥

आश्वलायनमाचार्य्यं प्रणिपत्य जगद्गुरुम् ।
देवस्वामिप्रसादेन क्रियते वृत्तिरीदृशी ॥

वैतानिकान्युक्तानि । अतः परं गृह्याणि वक्ष्यामः । वितानोऽग्नीनां विस्तारः । तत्र भवानि वैतानिकानि । बह्वग्निसाध्यानि कर्माणीत्यर्थः । गृहनिमित्तोऽग्निर्गृह्यः । तत्र भवानि कर्माण्यपि लक्षणया गृह्याणीत्युच्यन्ते । गृहशब्दो भार्य्यायां शालायाञ्च वर्त्तते । तथा "स गृहो गृहमागतः" इत्यत्र हि पूर्वो गृहशब्दो भार्य्यावचनः । उत्तरस्तु शालावचनः । येषां भार्य्यासंयोगादुत्पन्नाग्नौ इमानि कर्माणि प्रवर्त्तन्ते तेषामयं गृहशब्दो भार्य्यावचनः । येषान्तु दायविभागकालेऽग्निरुत्पद्यते तेषां शालावचनः । "भार्य्यादिरग्निर्दायादिर्वा तस्मिन् गृह्याणि" इति गौतमः । उक्तानुकीर्त्तनं सम्बन्धकरणार्थम् । सम्बन्धकरणे प्रयोजनं कथं सौत्राः परिभाषाः प्राप्नुयुरिति । कथं वा न प्राप्नुयुः शास्त्रान्तरत्वात् । कथं शास्त्रान्तरत्वम् । सूत्रसमाप्तावाचार्य्यनमस्कारात् । शास्त्रान्तर एवाचार्य्यनमस्कार उपपद्यते । इदं प्रतिज्ञासूत्रम् ॥ १ ॥

## त्रयः पाकयज्ञाः ॥ २ ॥

पाकयज्ञास्त्रयस्त्रिविधा इत्यर्थः। कुतः। हुताः प्रहुताः ब्रह्मणि हुताः इत्येकैकस्मिन् बहुवचननिर्देशात्। यदि हि त्रिविधत्वं न स्यात् एकवचनेन निर्देशं कुर्य्यात्। तस्मात्त्रिविधत्वमिति। पाकयज्ञा अल्पयज्ञाः। प्रशस्तयज्ञा वा। दृष्टश्चोभयत्र पाकशब्दः। "योऽस्मत् पाकतरः" इत्यत्राल्पत्वे पाकशब्दः। "तं पाकेन मनसाऽपश्यम्" इति "यो मा पाकेन मनसा" इति च प्रशंसायाम्। तेन आज्यहोमेष्वपि पाकयज्ञतन्त्रं सिद्धं भवति। यदि हि पाकशब्दः पक्वे वर्त्तेत आज्यहोमेषु तन्त्रं न स्यात्। इष्यते च। तस्मान्न तत्र वर्त्तते। प्रशस्तयज्ञा इत्युक्तम्। कथं प्रशस्तत्वं। उच्यते। यस्मादेतेषु संस्कारा उच्यन्ते। तेश्च ब्राह्मण्यमवाप्यते। के पुनस्ते संस्काराः। गर्भाधानादयः। तस्मात् सर्वेषां पाकयज्ञत्वमिति यदुक्तं तत् सम्यक्॥ २॥

कथं त्रिविधत्वमित्यत आह।

## हुता अग्नौ ह्रूयमाना अनग्नौ प्रहुता ब्राह्मणभाजने ब्रह्मणिहुताः ॥ ३ ॥

अग्नौ ह्रूयमानाः "हविष्यस्य जुहुयात्" [गृ०१।२।१] इत्येवमादयो हुताः। अनग्नौ क्रियमाणाः "अथ बलिहरणम्" [गृ० १।२।३] इत्येवमादयः प्रहुताः। ब्राह्मणभोजनं यत्रास्ति ब्राह्मणान् भोजयित्वेति ते ब्रह्मणि हुताः। अग्नाविति वचनमनग्नौ ह्रूयमानस्य सर्पबलेः प्रहुतत्वार्थम्। सोऽपि ह जुहोतिशब्दचोदितः। हुतादिसंज्ञाविधानं कृतस्नोपदेशार्थम्। शब्दतश्चार्थतश्च कृगतीर्थसंज्ञावत्। अथवा त्रैविध्योपदेशार्थम्। पाकयज्ञानामेतत् तन्त्रमिति वक्ष्यति। अत्र त्रैवि-

ध्योपदेशे सति तत् पाकयज्ञग्रहणमपार्थकम्। तत्समानजातीयानामेव हुतानां पाकयज्ञानां तन्त्रं यथा स्यादित्येवमर्थं चैविध्योपदेशः। प्रहुतं ब्रह्मणिहुतानां माभूत् तन्त्रमिति। तेन मर्पवल्यादाववदानधर्मो निवृत्तः, ब्राह्मणभोजने च निर्वापादि निवृत्तम्॥ ३॥

अथाप्यृच उदाहरन्ति यः समिधा य आहुती यो वेदेनेति॥ ४॥

अधिकपादग्रहणमृचोऽधिकस्य द्व्यृचस्य ग्रहणार्थं, न त्र्यचस्य। तृतीयस्यामप्यर्थविरोधात्। बहुवचनन्तु अगोरुधाय आ ते अग्ने यः समिधेति द्व्यृचावभिप्रेत्योपपन्नम्। ऋचामुदाहरणं कथम्। एतान्यपि कर्माणि नित्यानि श्रौतैस्तुल्यानि आहिताग्नेरपि स्युरित्येवमर्थम्॥ ४॥

समिधमेवापि श्रद्दधान आदधन्मन्येत यज इदमिति नमस्तस्मै, य आहुत्या यो वेदेनेति विद्ययैवाप्यस्ति प्रीतिस्तदेतत्पश्यन्नृषिरुवाच, अगोरुधाय गविषेद्युक्षाय यदस्मै वचः। घृतात् स्वादीयो मधुनश्च वोचतेति, वच एव म इदं घृताच्च मधुनश्च स्वादीयोऽस्ति प्रीतिः स्वादीयोऽस्त्वित्येव तदाह, आ ते अग्न ऋचा हविर्हृदा तष्टं भरामसि। ते ते भवन्तूक्षण ऋषभासो वशा उतेति, एत एव म उक्षाणश्च ऋषभाश्च वशाश्च भवन्ति, य इमं स्वाध्यायमधीयत इति

**यो नमसा स्वध्वर इति नमस्कारेण वै खल्वपि न वै देवा नमस्कारमति यज्ञो वै नम इति हि ब्राह्मणं भवति ॥ ५ ॥**

समिधमेवापि श्रद्दधान आदधन्मन्येत इत्यारभ्य यज्ञो वै नम इत्यन्तं ब्राह्मणं भवति। तत्र समिधेत्यस्य तात्पर्य्यकथनं ब्राह्मणम्। समिधमेवापीति। समिधमेवापि श्रद्दधान आदधद्यज इदं दैवतमिति मन्येतैव। कुतः। नमस्तस्मै। अत्र नमःशब्देनान्नमुच्यते। निघण्टुषु नमःशब्दोऽन्ननामसु पठितः। समिदपि तस्मै दैवताय नमो भवति अन्नं भवति। प्रीतिर्हेतु-र्भवतीत्यर्थः। श्रद्दधान इत्यनेन श्रद्धायुक्तस्यैव पाकयज्ञेऽधिकार इति ज्ञाप्यते। य आहुतीत्यस्य विवरणं ब्राह्मणम्। य आहुत्येति। तत्र "सुपां सु लुक्" [पा॰ ७।१।३९] इत्यादिना तृतीयैकवचनस्य पूर्वसवर्णादेशः। यो वेदेनेत्यस्य तात्पर्य्यकथनं ब्राह्मणम्। यो वेदेनेति। विद्ययैवेत्यादि। विद्ययापि प्रीतिर्दैवतस्यास्त्येवेत्यर्थः। द्रव्यत्यागाभावेऽपि वेदस्याध्ययनमात्रेणापि प्रीतिरस्तीत्यभिप्रायः। विद्यया प्रीतिरस्तीत्येतत् द्रढयितुं तस्मिन्नर्थे मन्त्रान्तरत्वं साक्षित्वेन श्रुतिर्दर्शयति। तदेतदित्यादि। तदेनदर्थरूपं पश्यन् ऋषिर्मन्त्रदृष्टा उवाच। अग्नेकथायेत्यादि। अस्मिन् सूत्रे स्तोतारः प्रत्यक्षीकृताः। एवंभूतायेन्द्राय हे सखायो वचो वोचत। घृतात् स्वादीयो मधुनश्चेति कृत्वेति। वच एवेत्यनेन तु तात्पर्य्यकथनपरेण ब्राह्मणेन देवताः प्रत्यक्षीकृताः स्तूयन्ते। हे इन्द्र! इदं मे मम वच एव घृताच्च मधुनश्च स्वादीयः। अतिहृद्यत्वात् स्वादीयस्त्वस्य प्रार्थनेयमिति दर्शयति। स्वादीयोऽस्त्वित्यादिना। स्वादीयोऽस्त्वित्येवासौ साक्षित्वेन ऋषिराहेत्यर्थः। अतोऽस्य

प्रीतिः। एवमध्ययनं रसात् स्वादुतरमित्युक्तम्। मांसादपि स्वादुतरमिति मन्त्रान्तरं दर्शयति। आ ते अग्न इत्यादि। अस्य मन्त्रस्य तात्पर्य्यकथनं ब्राह्मणम्। एत एवेत्यादि। हे अग्ने! एत एव मे मत्सम्बन्धिनः। अत एव ते तव उक्षाणश्च ऋषभाश्च वशाश्च भवन्ति। भवन्त्वित्यर्थः। भवन्तीति लिङर्थे लेट्। [पा० ३।४।७] विकरणसिप्रत्ययाडागमेकारलोपास्तु व्यवस्थितविकल्पत्वान्न भवन्ति। के मत्सम्बन्धिन इति चेत्। ये इमं स्वाध्यायमधीयत इति। अस्य मन्त्रस्य तात्पर्य्यं उक्षार्षभमांसेन तव यावती प्रीतिस्तावती तव विद्ययापि भवत्वित्यर्थः। उत्तरार्द्धतात्पर्य्यकथनं ब्राह्मणम्। यो नमसा स्वध्वर इति नमस्कारेणेत्यादि। नमस्कारेणापि योऽग्निमर्चयति सोऽपि स्वध्वरः शोभनयज्ञः। "तस्येदर्वन्तो रंहयन्त" इत्यादि पाकयज्ञानामर्थवादः। नमस्कारेणापि खलु प्रीतिरस्ति। कुतः। न वै देवा नमस्कारमति। अतिरतिक्रमणे। देवा हि नमस्कारं नातिक्रामन्ति। तमप्याद्रियन्त इत्यर्थः। किमिति नातिक्रामन्ति। यज्ञो वै नमः। नमस्कारोऽपि यज्ञ इत्यर्थः। इति हि ब्राह्मणं भवति। इतिशब्दो निर्दिष्टपरामर्शी। समिधमेवेत्यादि एवमन्तं ब्राह्मणं भवतीत्यर्थः॥ ५॥

इति प्रथमे प्रथमा कण्डिका॥ १॥

---

अथ द्वितीया कण्डिका।

**अथ सायंप्रातःसिद्धस्य हविष्यस्य जुहुयात्॥१॥**

अथशब्दो विशेषप्रक्रियार्थः। अथ गृह्याण्युच्यन्त इति। अत्र सायम्प्रातःशब्दौ लक्षणया अहोरात्रवचनौ। कुत एतत्। स्मृतिदर्शनात्। "सायम्प्रातरशनान्यभिपूजयेत्" इति। अश-

तच्च मध्याह्ने विहितम्। "पूर्वाह्णे देवानां मध्यन्दिने मनुष्याणां अपराह्णे पितृणाम्" इति। वैश्वदेवानन्तरं आतिथ्यादिविधानाच्च। सिद्धं पक्वम्। सिद्धस्येति दध्नः पयसश्च माभूत्। हविष्यस्येति चणककोद्रवादीनां माभूत्। कथमहविष्यस्य प्राप्नुयात्। अन्नसंस्कारत्वात्। उभयमपि तर्हि नारभ्यम्। ओदनादेव सिद्धस्य हविष्यस्य च भविष्यति। यथा चतुरश्चतुरो मुष्टीन् निर्वपतीत्युक्ते हविष्यमेव प्रतीयते सिद्धं च तद्भवति। अनारभ्यमाणे दोषः। अनादिष्टद्रव्यत्वादाज्यं प्रसज्येत। आज्यशेषेण जुह्वति हृदये इति ब्रुवन् ज्ञापयति यत्र द्रव्यं नादिश्यते तत्राज्येन होम इति। तस्मात्तन्निवृत्त्यर्थं सिद्धग्रहणमारभ्यं तर्हि हविष्यग्रहणमपार्थकम्। नन्वन्नसंस्कारत्वादहविष्यस्यापि स्यात्। अपूर्वत्वाच्च न स्यात्। तर्हि तन्त्रनिवृत्त्यर्थं हविर्ग्रहणम्। कथं हविष्यस्य होम एव स्यात् न तन्त्रमिति। ननु उत्तरत्र विधानान्न तन्त्रं प्राप्नोतीति च शङ्का न कार्या। तर्हि विवाहेऽपि तन्त्रनिवृत्तिप्रसङ्गात्। तत्र चेष्यते तन्त्रम्। होममन्त्रानाह ॥ १ ॥

**अग्निहोत्रदेवताभ्यः सोमाय वनस्पतयेऽग्नीषोमाभ्यामिन्द्राग्निभ्यां द्यावापृथिवीभ्यां धन्वन्तरय इन्द्राय विश्वेभ्यो ब्रह्मणे ॥ २ ॥**

अग्निहोत्रदेवताभ्य इति विधायको न मन्त्रः। तथाऽर्थप्रतीतेः। अग्निहोत्रशब्दोऽयं द्रव्ये कर्मणि च वर्त्तते। तत्राग्निहोत्रदेवताभ्य इति किं द्रव्यदेवता गृह्यन्ते उत कर्मदेवता इति संशयः। का पुनर्द्रव्यदेवताः। "रुद्राद्या रौद्रञ्चविसत्" इत्याद्याः श्रुतावुक्तास्ता न सम्भवन्ति। भक्तिमात्रत्वात्। तेन कर्मदेवता गृह्यन्ते। एवञ्चेदग्निगृहपतिरित्येवमाद्या अपि

प्राप्नुवन्तीति शङ्का न कार्य्या। तासामनित्यत्वात्। कास्तर्हि। अग्निः सूर्य्यः प्रजापतिश्चोभयत्र। श्रुतौ चास्य सम्यगुपदेश। "तस्य वा एतस्याग्निहोत्रस्य" इत्यादि। सोमाय वनस्पतये इत्येको मन्त्रः। वनस्पतेर्गुणत्वेन दृष्टत्वात। "अग्निर्गृहपतिः सोमो वनस्पतिः" इति। समाचारश्चैवमेव। इत्युक्तो देवयज्ञः॥ २॥

## स्वाहेत्यथ बलिहरणम् ॥ ३ ॥

अप्रधितयागत्वादेव स्वाहाकारे सिद्धे स्वाहाकारवचनं ज्ञापनार्थम्। एतज्ज्ञाप्यते। अन्यत्र बलिहरणे स्वाहाकारो न भवतीति। तेन वैश्वदेवबलौ नमस्कारो भवति। अथशब्द आनन्तर्य्यार्थः। तदथा कर्मान्तरत्वात् कालान्तरे वा बलिहरणं स्यात्। अग्न्यनन्तरमेव तत् पूर्वो वा स्यात्। उत्तरो वा। मनुष्ययज्ञस्यानन्तरमेव। "वैश्वदेवं कृत्वा अतिथिमाकाङ्क्षेत्" इति वचनात्॥ ३॥

## एताभ्यश्चैव देवताभ्योऽद्भ्य ओषधिवनस्पतिभ्यो गृहाय गृहदेवताभ्यो वास्तुदेवताभ्यः ॥४॥

एताभ्यः प्रागुक्ताभ्यो देवताभ्यश्चकाराद्वक्ष्यमाणदेवताभ्यश्च। बलिहरणं कार्य्यम। एवकारः पादपूरणः॥ भूमौ प्राक्संस्थां पङ्क्तिं करोति। ब्रह्मणे स्वाहेति हुत्वाऽन्तरालमुक्त्वा-ऽद्भ्य इत्यादिभिर्जुहोति। गृहदेवताभ्य इति मन्त्रः न विधायकः। तथा वास्तुदेवताभ्य इति च। यदि हि विधायकः स्यात् उभयवचनमपार्थकं स्यात्। गृहमेव हि वास्त्विल्युच्यते॥ ४॥

## इन्द्रायेन्द्रपुरुषेभ्यो यमाय यमपुरुषेभ्यो वरु

णाय वरुणपुरुषेभ्यः सोमाय सोमपुरुषेभ्य इति प्रतिदिशाम् ॥ ५ ॥

दिग्ग्रहणेन चतस्रो दिशो गृह्यन्ते। यत्रैव प्रधानदेवतास्तत्रैव पुरुषैर्भवितव्यमिति कृत्वा प्रधानानामुत्तरतः पुरुषेभ्यो बलिं हरेत् ॥ ५ ॥

ब्रह्मणे ब्रह्मपुरुषेभ्य इति मध्ये ॥ ६ ॥

दिग्देवतानां मध्ये पूर्वोक्ते अन्तराले ॥ ६ ॥

विश्वेभ्यो देवेभ्यः ॥ ७ ॥

मध्य एव ॥ ७ ॥

सर्वेभ्यो भूतेभ्यो दिवाचारिभ्य इति दिवा ॥८॥

मध्य एव। दिवाग्रहणं ज्ञापनार्थं क्रियते। तेन वैश्वदेवस्य प्रातरारम्भणं भवति। इतरथा सायम्प्रातरुपदेशात् सायमुपक्रमः स्यात् अग्निहोत्रवत्। तच्चानिष्टम्। अतो दिवाग्रहणम्। तेनाग्नये स्वाहेति सायं जुहुयादित्यत्र सायमुपक्रमः ॥ ८ ॥

नक्तञ्चारिभ्य इति नक्तम् ॥ ९ ॥

दिवाचारिभ्य इत्यस्य स्थाने नक्तञ्चारिभ्य इति नक्तं भवति

रक्षोभ्य इत्युत्तरतः ॥ १० ॥

सर्वासामुत्तरतः ॥ १० ॥

स्वधा पितृभ्य इति प्राचीनावीती शेषं दक्षिणा निनयेत् ॥ ११ ॥

"यज्ञोपवीतशौचे च" [श्रौ० १।१।१०] इति यत्र प्राचो-

नावीतित्वं निवीतित्वं वाऽऽचार्य्येण न विहितं तत्र यज्ञोपवीतित्वं प्राप्तम्। अतः प्राचीनावीतित्वं विधीयते। निनयेदिति वचनं क्रियान्तरज्ञापनार्थम्। तेन बलिहरणमिदं न भवति। किमेवं सिध्यति स्वाहाकारो न भवति। ननु स्वधाकारः प्रदानार्थः स्वाहाकारश्च प्रदानार्थ इत्युभयोरेककार्य्यकारित्वेन समानजातीयत्वात् स्वधाकारस्तस्य बाधको भवति। नैतदेवम्। समानार्थयोः समुच्चयो दृश्यते। यथा सोमाय पितृमते स्वधा नम इति स्वधानमस्कारयोः तद्वदत्राप्याशङ्का स्यात्। का पुनरियं क्रिया। पितृयज्ञः। एवं च कृत्वा पितृयज्ञार्थं ब्राह्मणभोजनमन्वहं न कर्त्तव्यमिति सिद्धम्। शेषग्रहणमानन्तर्य्यार्थम्। असत्यस्मिन् क्रियान्तरत्वात्कालान्तरे वा स्यात्। एवमुक्तं वैश्वदेवम्। यस्मिन् कस्मिंश्चिदग्नौ वैश्वदेवं कार्य्यं न गृह्य एवेति नियमः। कुतः। प्राक्प्रधानादिवाहाग्नेः। यदि हि तत्राभिप्रेतमभविष्यत् तमेव पूर्वं ब्रूयात्। पाणिना च वैश्वदेवं कार्य्यं न पात्रान्तरेण शक्यत्वात्॥ ११॥

इति प्रथमे द्वितीया कण्डिका।

---

अथ तृतीया कण्डिका।

अथ खलु यत्र क्व च होष्यन्त्स्यादिषुमात्रावरं सर्वतः स्थण्डिलमुपलिप्योल्लिख्य षल्लेखा उदग्गायतां पश्चात्प्रागायते नानान्तयोस्तिस्रो मध्ये तदभ्युक्ष्याग्निं प्रतिष्ठाप्यान्वाधाय परिस-

**मूह्य परिस्तीर्य्य पुरस्ताद्दक्षिणत: पश्चादुत्तरत इत्युदकसंस्थन्तूष्णीं पर्य्युक्षणम् ॥ १ ॥**

अथशब्दोऽधिकारार्थः। इत उत्तरं यानि वक्ष्यन्ते तेषामेवायं होमविधिर्भवतीति। तेन वैश्वदेवः क्वचग्रहणेन प्राप्यमाणो होष्यधर्मो न भवति। खलुशब्दोऽपार्थकः। मिताक्षरेष्वनर्थक इति वचनात्। यत्र-क्व-च-ग्रहणमहरहः क्रियान्तरविध्याशङ्कानिवृत्त्यर्थम्। यत्र क्व च होष्यन्त्स्यादिति होममनूद्य धर्मविधिः। तर्हि यत्रेत्येवास्तु क्वच-ग्रहणमनर्थकम्। न तन्त्रप्रतिषेधविषयेऽप्यौपासनाग्निपरिचरणे एतत्सूत्रविहितपरिसमूहनपरिस्तरणपर्य्युक्षणानां प्राप्त्यर्थं क्वच-ग्रहणम्। लेखादयो न सन्तीति वक्ष्यामः। इषुमात्रा मात्रा यस्य स्थण्डिलस्य तदिषुमात्रम्। एकस्य मात्राशब्दस्य लोपः। उष्ट्रमुखवत्। तच्च तदवरञ्च इषुमात्रावरम्। अवरं निकृष्टमित्यर्थः। सर्वतः सर्वासु दिक्षु। चतसृष्वित्यर्थः। चतसृष्वपि दिक्षु इषुमात्रप्रमाणं ततोऽधिकं वा चतुरस्रं स्थण्डिलं गोमयेनोपलिप्य षट् लेखा उल्लिखेत्। षड्-ग्रहणं कथम्। षट्स्वपि लेखासु अग्नेः स्थापनं यथा स्यादिति केनाचिद्यज्ञियेन शकलेन स्थण्डिलमध्ये उदग्दीर्घां प्रादेशमात्रां न्यूनां वा लेखामग्निप्रतिष्ठापनदेशस्य पश्चाल्लिखेत्। नानैत्यसंसर्गार्थम्। तस्या अन्तयोर्नाना असंसृष्टे प्रागायते लेखे लिखेत्। ततस्तिस्रो मध्ये असंसृष्टाः प्रागायताः लेखाः लिखेत्। शकलं तत्रैव निधाय। स्थण्डिलमभ्युक्ष्य शकलं निरस्याप उपस्पृश्याभ्यात्ममग्निं प्रतिष्ठाप्यान्वादधाति। ततोऽतिदेशप्राप्तं बर्हिष इध्मस्य च सन्नहनं करोति। अन्वाधानं नाम कर्माङ्गत्वेन द्वयोस्त्रिसृणां समिधाम् अभ्याधानम्। ततः परिसमूह्य परि-

समूहनं नामाऽग्नेः समन्तात् परिमार्जनम्। तच्चाग्निहोत्रवत्। ततः परिस्तीर्य्य। पुरस्ताद्दक्षिणतः पश्चादुत्तरत इत्येवम्। उदक्संस्थवचनं एकैकस्यां दिश्युदक्संस्थताप्राप्त्यर्थम्। अथवा इत्युदक्संस्थमिति पृथग्योगः। निपातानामनेकार्थत्वादितिशब्द एवम्प्रकारे। एवंविधं यत्कर्म सर्वदिक्सम्बद्धं परिसमूहनपर्य्युक्षणपरिस्तरणस्पन्दनादिकं तदपवर्जितायां दिश्यारभ्योदक्संस्थं कार्य्यमित्यर्थः। ततस्तूष्णीं पर्य्युक्षणं करोति। तूष्णीग्रहणं मन्त्रवर्जमन्ये धर्म्मा अग्निहोत्रदृष्टा भवन्तीत्येवमर्थम्। त्रिस्त्रिरेकैकं पुनः पुनरुदकमादायादायान्ते च कर्मणा पर्य्युक्षणम्। उभयत्र च परिसमूहनपूर्वकत्वमित्यत्र पुनः परिसमूहनविधानं मध्ये परिस्तरणनिषेधार्थम्। एतस्मिन् काले उत्तरतोऽग्नेरपः प्रणयति चमसेन कांस्येन मृन्मयेन वा। उत्तरत्र विनियोगदर्शनात् ॥ १ ॥

पवित्राभ्यामाज्यस्योत्पवनम् ॥ २ ॥

कार्य्यमिति शेषः। अथ किंलक्षणे पवित्रे कथं वा उत्पवनं कार्य्यमित्येतद्द्वयं निर्णेतुमाह ॥ २ ॥

अप्रच्छिन्नाग्रावनन्तर्गर्भौ प्रादेशमात्रौ कुशौ नानान्तयोर्गृहीत्वाङ्गुष्ठोपकनिष्ठिकाभ्यामुत्तानाभ्यां पाणिभ्यां सवितुष्ट्वा प्रसव उत्पुनाम्यच्छिद्रेण पवित्रेण वसोः सूर्य्यस्य रश्मिभिरिति प्रागुत्पुनाति सकृन्मन्त्रेण द्विस्तूष्णीम् ॥ ३ ॥

प्रशब्दः सूक्ष्माच्छिन्नाग्रयोरभिव्यक्त्यर्थः। न विद्यते अन्तर्मध्ये गर्भो ययोस्तौ तथोक्तौ। प्रादेशमात्रौ कुशौ। एवंलक्षणयुक्तौ कुशौ पवित्रसञ्ज्ञौ। नानान्त्यसंसर्गार्थम्। पवित्रे अन्तयो-

रसंसृष्टे अङ्गुष्ठोपकनिष्ठिकाभ्यामुत्तानाभ्यां पाणिभ्यां गृहीत्वा प्रागुत्पुनाति सकृन्मन्त्रेण द्विस्तूष्णीम्। प्रागिति पाठः कार्य्यः। प्राङिति पुल्लिङ्गपाठे तु कर्त्तुः प्राङ्मुखत्वं स्यात्। तच्च परिभाषासिद्धम्। ननु कर्मणश्चापि प्राक्त्वं तत एव सिद्धम्। सत्यम्। तत्तु शास्त्रान्तरदृष्टं पुनराहारनिवृत्त्यर्थम्। तेन ज्ञायते शास्त्रान्तरदृष्टानामविरोधिनां पात्रासादनादीनामिच्छातः क्रियेति।

इत्थं हि शास्त्रान्तरे दृष्टम्। परिस्तरणकाले उत्तरतोऽग्नेः कांश्चिद्दर्भानास्तीर्य्य ब्रह्मवत्सु कर्मसु दक्षिणतोऽग्नेरपि कांश्चिद्दर्भानास्तीर्य्य ततोऽग्निं पर्य्युक्ष्य उदगग्नेर्दर्भेषु द्वन्द्वं न्यञ्चि पात्राणि प्रयुनक्ति उभाभ्यां पाणिभ्याम्। अयं पात्रासादनक्रमः।

"प्रोक्षणपात्रमथ स्रुवयुक्तं पात्रमपां प्रणयनाय विशिष्टम्।
भाजनमाज्यहविर्ग्रहणार्थं त्विध्ममथो परिसादय दर्भान्॥"

इति। आज्यहोमेषु दर्वीमत्सु तु कर्मस्वयं क्रमः।
स्थालीश्चरोः प्रोक्षणभाजनञ्च दर्वीस्रुवौ सादय दर्विहोमे।
मात्रं प्रणीतार्थमथाज्यपात्रमिध्मं क्रमेण क्रमवित् कुशांश्च॥

ततोऽप्रच्छिन्नाग्रावित्यु्क्तलक्षणे पवित्रे गृहीत्वा प्रोक्षणपात्रे निधायाप आसिच्य ताभ्यां त्रिरुत्पूय उत्तानानि पात्राणि कृत्वा विस्रस्येध्मं सर्वाणि पात्राणि प्रोक्षति। ततः प्रणीता-पात्रं प्रत्यगग्नेर्निधाय तस्मिंस्ते पवित्रे अन्तर्धायाद्भिः पूरयित्वा गन्धादि प्रक्षिप्य पाणिभ्यां पात्रं नासिकान्तमुद्धृत्योत्तरतोऽग्निं दर्भेषु निधाय दर्भैः प्रच्छाद्यासादयेदिति। आचार्य्यस्य तु पूर्णपात्रं कार्य्यम्। अन्यस्य तु करणेऽभ्युदयः। अकरणे न प्रत्यवाय इत्याशयः।

इत्थं चान्यशास्त्रे दृष्टम्। पूर्णपात्रनिधानानन्तरं तत्रस्थे

पवित्रे गृहीत्वाज्यस्थाल्यां निधायाज्यमासिच्योदगङ्गारान-पोह्य तेष्वधिश्रित्याज्यमवज्वलयेत्। द्वे दर्भाग्रे प्रच्छिद्य प्रक्षाल्याज्ये प्रत्यस्य पुनर्ज्वलता तेनैवोल्मुकेन त्रिः परिहरेत् येनावज्वलनं कृतम्। ततः शनैः उदगुद्वास्याङ्गारानतिसृज्य तत्रस्थमेवाज्यमुत्पूय पवित्रे त्वद्भिः प्रोक्ष्याग्नौ विनिक्षिपेदिति। आचार्य्यस्योत्पवनं नित्यम्। अन्यत्प्राप्तिकम्।

पूर्ववदित्याकूतं स्रुक्स्रुवसंमार्जनमप्यन्यशास्त्रे दृष्टम्। तस्यापीच्छातः क्रिया। अनयोः सम्मार्ग उच्यते। दक्षिणेन हस्तेनोभौ गृहीत्वा सव्येन कांश्चिद्दर्भानादाय सहैवाग्नौ प्रताप्य जुहूं निधाय दक्षिणेन पाणिना स्रुवस्य विलं दर्भाग्रैर्विलादारभ्य प्रागपवर्गं त्रिः संमृज्याधस्तादग्रेणैवाग्रमभ्यात्मन्त्रिः संमार्ष्टि। ततो दर्भाणां मूलेन दण्डस्याधस्तात् विलपृष्ठादारभ्य यावदुपरिष्टाद्विलं तावत्त्रिः संमार्ष्टि। अथाऽद्भिः प्रोक्ष्य स्रुवं निष्टप्याज्यस्थाल्यां निधायोदकस्पृष्टैरेव दर्भैर्जुहूं चैवमेव संमार्ष्टि। ततो दर्भानद्भिः प्रक्षाल्याग्नावनुप्रहरेत्। एवं संमार्गः।

स्विष्टकृदन्ते चेध्मसन्नहनानामग्नौ प्रासनं दृष्टम्। अन्यदपि यदस्माच्छास्त्राऽविरुद्धं परशास्त्रे दृष्टन्तदपीच्छातः कार्य्यमिति ज्ञापयितुं प्रागुत्पुनातीति पुनराहारप्रतिषेधः कृतः। किञ्च उत्पुनाति त्रिरित्येव वाच्यं लाघवार्थम्। तथा सति सर्वत्रैव कर्मावृत्तावित्यनेन सकृन्मन्त्रेण द्विस्तूष्णीं इति सिध्यति। एवं सिद्धे इदं वचनं गृह्ये कर्मावृत्तौ मन्त्रावृत्तिर्भविष्यतीत्येवमर्थम्। पूर्वयोगः किमर्थः। अस्याधिकारार्थ इति चेत्। तर्हि प्रागुत्पुनात्याज्यमित्यत्रैव वाच्यम्। अथ पवित्रसंज्ञार्थः तर्हि कुशौ पवित्रे इत्यत्रैव वाच्यम्। उच्यते। पूर्वेणामन्त्रकमुत्पवनं विधीयते। अनेन तु समन्त्रकम्। तत्र वैतानिके

असमन्त्रकं गृह्ये कर्मणि समन्त्रकमित्येवं विनिवेशः ॥ ३ ॥

## कृताकृतमाज्यहोमेषु परिस्तरणम् ॥ ४ ॥

कृतिरेव कृतम्। कृतश्च अकृतश्च यस्य तत् तथोक्तम्। आज्यमेव यत्र हविः स आज्यहोमः। अन्यथाज्यग्रहणस्य वैयर्थ्यं स्यात्। सर्वत्र ह्याघारादयः सन्त्येव। आज्यहोमेषु परिस्तरणं कार्य्यं वा न वेत्यर्थः। अयं च परिस्तरणविकल्पो यत्राग्रहणमस्ति यथा "आज्याहुतीर्जुहुयात्" इति तत्रैव भवति न पुनरनादिष्टाज्यहोमेषु। यद्यनादिष्टहोमेष्वप्ययं विकल्पः स्यात् तत्राज्यग्रहणमपार्थकं स्यात् ॥ ४ ॥

## तथाज्यभागौ पाकयज्ञेषु ॥ ५ ॥

तथेति कृताकृतावित्यर्थम्। पाकयज्ञेषु सर्वेष्वाज्यभागौ कार्य्यौ वा नवेत्यर्थः। पाकयज्ञग्रहणमाज्यहोमाधिकारनिवृत्त्यर्थम् ॥ ५ ॥

## ब्रह्मा च धन्वन्तरियज्ञशूलगववर्जम् ॥ ६ ॥

तथेति वर्त्तते। पाकयज्ञेष्विति च। ब्रह्मा च सर्वेषु पाकयज्ञेषु कृताकृतो भवति। धन्वन्तरियज्ञं शूलगवं च वर्जयित्वा। अथ तयोर्नित्यो भवति उत नैव भवति। नित्यो भवतीति ब्रूमः। कुतः। तयोरुपदेशात्। "ब्रह्माणमग्निं चान्तरा वेद्यां परित्रवन्तं ब्रह्माणमुपवेश्य" इति च। तर्हि तस्मादेव नित्योऽस्तु किमनेनेति च शङ्का न कार्य्या। अस्मिन् विकल्पप्रतिषेधेऽसति उपदेशस्य पक्षे कृतार्थत्वात्। तयोरपि ब्रह्मा चौलवत् कृताकृतः स्यात्। ब्रह्मास्ति चेत् प्रणीताप्रणयनात् पूर्वं समस्तपाण्यङ्गुष्ठो भूत्वाऽग्रेणाग्निं परीत्य दक्षिणतः कुशेषु "निरस्तः परावसुः" इति तृणं प्रत्यग्दक्षिणान्निरस्य "इदमहं सर्वा वसोः सदने सीदामि" इति मन्त्रेणोपविशेत्। ततो

बृहस्पतिर्ब्रह्मा ब्रह्मसदन आशिष्यते "बृहस्पते यज्ञं गोपाय" इत्यन्तं ब्रह्मजपं जपेत्। ततः "ब्रह्मन्नपः प्रणेष्यामि" इति कर्त्ताऽतिसृष्टः "भूर्भुवः स्वर्बृहस्पतिप्रसूतः" इति जपित्वा "ॐ प्रणय" इत्यतिसृजेत्। केचिदतिसर्जनं प्रत्यतिसर्जनञ्च नेच्छन्ति। कर्मान्ते प्रायश्चित्तानि संस्थाजपं च कुर्य्यात्। सर्वदा यज्ञमना भवेदुदङ्मुखश्च ॥ ६ ॥

**अमुष्मै स्वाहेति जुहुयात् ॥ ७ ॥**

क्वचिन्नामधेयेन होम उक्तः। "सावित्रैर् ब्रह्मणे" इत्यादि। क्वचिन्मन्त्रेण होम उक्तः। "अग्ने नय सुपथा राये अस्मान्" इति चतसृभिरिति। यत्र तु नोभयथा तत्र तु नामधेयेन कथं होमः स्यात् इत्येतत् सूत्रम्। प्राजापत्यस्य स्थालीपाकस्य हुत्वा काम्याश्चरव इत्यादौ ॥ ७ ॥

**अग्निरिन्द्रः प्रजापतिर्विश्वे देवा ब्रह्मेत्यनादेशे ॥ ८ ॥**

यत्र होमस्यानादेशः कर्मणश्चादेशस्तत्रैता देवता होतव्याः। कुत्र। जातकर्मादौ। तर्हि रथारोहणेऽपि स्यात्। एवं तर्हि अन्यथा व्याख्यास्यामः। यत्र होमश्चोद्यते न मन्त्रः चौलकर्मादौ "नैके काञ्चन" [गृ० १।४।६] पक्षे तत्रैताभ्यो देवताभ्यो जुहोति। मन्त्रानादेश इतीयमेव व्याख्या साध्वी। मन्त्रप्रकरणत्वात्। तेन जातकर्मादौ न होमोऽस्ति। अन्ये तु पूर्वोक्तदोषपरिहारेण वर्णयन्ति। यत्र परशास्त्रे होमश्चोद्यते स्वशास्त्रे तु कर्ममात्रं तत्रैता देवता भवन्तीति। क्व। जातकर्मादौ ॥ ८ ॥

एकबर्हिरादाज्यस्विष्टकृतः स्युस्तुल्यकालाः ॥ ९ ॥

एकबर्हिरादिर्येषां पाकयज्ञानां ते तथोक्ताः। तुल्यकाला एककालाः। एकस्मिन् काले यद्यनेके पाकयज्ञाः कार्य्यत्वेन प्राप्ताः तदा ते समानतन्त्राः कार्य्या इत्यर्थः। किमुदाहरणम्। यदा पर्वणि रात्रौ काम उत्पद्यते तदा काम्यपार्वणयोरेककालत्वम्। यदा वाऽऽग्रयणाऽऽश्वयुजी कर्मणी आश्वयुज्यां क्रियेते तदा तयोरेककालत्वम्। बर्हिरादिग्रहणस्य तन्त्रोपलक्षणार्थतां स्पष्टयितुं यज्ञगाथामुदाहरति ॥ ९ ॥

तदेषाभियज्ञगाथा गीयते।
पाकयज्ञान् समासाद्य एकाज्यानेकबर्हिषः।
एकस्विष्टकृतः कुर्य्यान्नानापि सति दैवते ॥१०॥
इति।

तस्मिन्नर्थे एषा यज्ञगाथाऽभिगीयते पठ्यते। बहून् पाकयज्ञानेकस्मिन् काले समासाद्य प्राप्य एकाज्यानेकबर्हिषः एकस्विष्टकृतः कुर्य्यान्नानापि सति दैवते। न प्रतिदैवतं तन्त्रमावर्त्तयितव्यमित्यर्थः ॥ १० ॥

इति प्रथमे तृतीया कण्डिका।

---

अथ चतुर्थी कण्डिका।

उदगयन आपूर्य्यमाणपक्षे कल्याणे नक्षत्रे चौलकर्मोपनयनगोदानविवाहाः ॥ १ ॥

अनेन चौलकर्मादीनां कालो विधीयते। उदग् यदा

गच्छत्यादित्यः तदुदगयनम्। तथा लोकप्रसिद्धेः। आपूर्य्य-माणस्य चन्द्रस्य यः पक्षः स तथोक्तः। सहि मासस्य च पक्षस्य च कर्त्ता। अथवा आपूर्य्यमाणश्चासौ पक्षश्च आपूर्य्यमाण-पक्षः। सहि चन्द्ररश्मिभिरापूर्य्यते शुक्लपक्ष इत्यर्थः। ज्योतिः-शास्त्राविरुद्धं कल्याणं नक्षत्रम्। चौलकर्म्मेति चौलस्यैव संज्ञा-न्तरं नतु व्रतादेशानामयं काल इष्यते। स कथं प्राप्नोति। उपनयनातिदेशात्। तर्हि अत्र गोदानग्रहणमपार्थकं चौला-तिदेशात्। उच्यते। समावर्त्तनार्थं गोदानग्रहणम्। "गोदा-निकं कर्म कुर्वीत" इति कर्मग्रहणं यथा कर्मणोऽन्यनियमं वाग्यमनादिकं निवर्त्तयति तथा कालमपि निवर्त्तयेत्। तस्मात् गोदानग्रहणं यत्र गोदानगन्धोऽप्यस्ति तत्रापि यथा स्यात्। तर्हि समावर्त्तनग्रहणमेव कार्य्यम्। उच्यते। लाघ-वार्थं गोदानग्रहणम् ॥ १ ॥

## सार्वकालमेके विवाहम् ॥ २ ॥

एके आचार्य्याः सर्वस्मिन् काले विवाहमिच्छन्ति। नोद-गयनादिनियमः। तेषां कोऽभिप्रायः। दोषश्रवणात् "ऋतु-मत्यां हि तिष्ठन्त्यां दोषः पितरमृच्छति" इति। अन्ये च लौकिका दोषाः समुत्पद्यन्ते ॥ २ ॥

## तेषां पुरस्तात् चतस्र आज्याहुतीर्जुहुयात् ॥३॥

तेषां ग्रहणं किमर्थम्। विवाहस्यानन्तरत्वात् सर्वेषां प्राप्त्यर्थमिति चेत्। तन्न दर्शनात्। सर्वेषां स्युः यदयं विवाहे चतुर्थीमित्याह। उच्यते। तेषां सम्बन्धिन्यः अन्तर्वर्त्तिन्यः एता आहुतयो भवन्ति नतु तेभ्यः पूर्वं भवन्तीत्येवमर्थं तेषां ग्रहणम्। तर्हि पुरस्ताद्-ग्रहणमपार्थकम्। न। प्रयोजनमुपरिष्टाद्व-च्यामः। संख्यावचनं किमर्थम्। तत्रैके ब्रुवते। यत्र परि-

मात्रवचनं प्रत्यृचग्रहणं वा नास्ति "धाता ददातु दाशुष इति द्वाभ्याम्" इत्यादौ तत्र कथं प्रत्यादेशं होमः स्यादिति। तदसत्। एकमन्त्राणि कर्माणीति न्यायात्। अपि च। स्वाहाकारान्तैर्मन्त्रैरिति प्रतिमन्त्रं स्वाहाकारः प्राप्तः स च प्रदानार्थः। न च तमतिक्रम्य होतव्यमिति युक्तं वक्तुमस्य विद्यमानायां गतौ। तेन सर्वत्र प्रत्यृचमेव होम इति सिद्धम्। का पुनरस्य गतिः। तत्रैके नियमार्थमिति प्राहुः। समुच्चयपक्षेऽपि कथं चतस्र एव स्युः न बह्व्य इति कथं प्रयोगः एकैकस्या ऋचोऽन्ते एकैका आहुतिरिति। तदप्यसत्। प्राधान्येनाहुतिविधिप्रकरणत्वात् आहुतिसमुच्चय एव न मन्त्रसमुच्चयः। किमर्थं तर्हीदं नियमार्थमेव चतस्र एव स्युरिति। तेनाज्यभागौ न भवतः। तर्हि स्विष्टकृदपि न स्यात्। न। पुरस्तान्नियमार्थं हि पुरस्ताद्ग्रहणं कृतम्। आघारौ तु स्त एव अनाहुतित्वात्। आज्यग्रहणं परिस्तरणविकल्पार्थम्॥ ३॥

**अग्न आयूंषि पवस इति तिसृभिः प्रजापते न त्वदेतान्यन्य इति च व्याहृतिभिर्वा॥४॥**

चतसृभिः। चतसृणामेव हि सूत्रे व्याहृतिसंज्ञा कृता। व्याहृतिभिश्च भूः स्वाहेत्यादिभिः॥ ४॥

**समुच्चयमेके॥ ५॥**

एके आचार्याः ऋगाहुतीनां व्याहृत्याहुतीनां च समुच्चयमिच्छन्ति। तेनाष्टाहुतयः॥ ५॥

**नैके काञ्चन॥ ६॥**

एके आचार्याः काममप्याहुतिं नेच्छन्ति। नैक इत्येव वक्तव्ये

काञ्चनग्रहणस्रगाहुतीनां व्याहृत्याहुतीनां चायं प्रतिषेधो यथा स्यात् किम्शब्दस्य सर्वनामत्वात् सर्वनाम्नाञ्च प्रकृतपरामर्षत्वात् अन्यास्त्वाहुतयो होतव्या इत्येवमर्थम् । तेनाऽनादेशाहुतयः सिद्धाः ॥ ६ ॥

त्वमर्य्यमा भवसि यत् कनीनामिति विवाहे चतुर्थीम् ॥ ७ ॥

अत्र संशयः । पूर्वस्या बाध उतोत्कर्ष इति । उत्कर्ष इति ब्रूमः । असमानजातित्वात् । समानजातेरेव हि बाधो विहितः । एष समानजातिधर्म इति तच्छब्दचोदितश्च समानजातिर्भवति । यथा । अथ सामिधेन्यः ताः सामिधेन्य इति । अत्र च तच्छब्दचोदितत्वात् न बाधः । अपि तूत्कर्षः । यथा "प्रतिप्रस्थाता वाजिनि हतीयः" इत्यत्र आग्नीध्रस्योत्कर्षः तद्दृष्टत्वापि । अपि च । संख्यानिर्दिष्टो न पूर्वं बाधते । यत्र तु बाधते तत्र स्थानग्रहणं करोति । यथा हतीयाहुतिस्थाने महाव्रतमिति । तस्मात् उत्कर्ष इति सिद्धम् ॥ ७ ॥

इति प्रथमे चतुर्थी कण्डिका ।

---

अथ पञ्चमी कण्डिका ।

कुलमग्रे परीक्षेत ये मातृतः पितृतश्चेति यथोक्तं पुरस्तात् ॥ १ ॥

कुलशब्देनाभी वंशी महापातकादिरहितावेति सिद्धौ तथाऽपस्मारादिदोषरहितावेति कुलमग्रे प्रथमं परीक्षेत । कथम् । ये मातृतः पितृतश्चेति यथोक्तं पुरस्तात् । "ये मातृतः पितृतश्च दशपुरुषं समनुष्ठितविद्यातपोभ्यां पुण्यैश्च कर्मभिर्ये-

षामुभयतो वा ब्राह्मणं निनयेयुः पितृतश्चैके" इति । अग्रे-
वचनं वधूवरगुणेभ्यः कुलमेव प्रधानं स्यात् इत्येवमर्थम् ॥ १ ॥

अथ वरगुणमाह ।

**बुद्धिमते कन्यां प्रयच्छेत् ॥ २ ॥**

अर्थदर्शिनी बुद्धिः । कोऽर्थः । यः शास्त्राविरुद्धः । तद्वते
बुद्धिमते कन्यां प्रयच्छेत् ॥ २ ॥

अथ कन्यागुणमाह ।

**बुद्धिरूपशीललक्षणसम्पन्नामरोगामुपयच्छेत ॥ ३ ॥**

बुद्धिरूपशीललक्षणैर्युक्तां रोगवर्जितां कन्यामुपयच्छेत
स्वीकुर्य्यात् । यत्र स्वमनो रमते तद्रूपम् ॥ ३ ॥

लक्षणानां दुरवगाहत्वं मत्वा परीक्षान्तरमाह ।

**दुर्विज्ञेयानि लक्षणानीति ॥ ४ ॥**

लक्षणानि दुर्ज्ञेयानीति कृत्वा एवं परीक्षेत ॥ ४ ॥

**अष्टौ पिण्डान् कृत्वा ऋतमग्रे प्रथमं जज्ञ ऋते सत्यं प्रतिष्ठितं यदियं कुमार्य्यभिजाता तदियमिह प्रतिपद्यतां यत् सत्यं तद्दृश्यतामिति पिण्डानभिमन्त्र्य कुमारीं ब्रूयादेषामेकं गृहाणेति ॥ ५ ॥**

क्षेत्रादिभ्योऽष्टभ्यो मृदमाहृत्याऽष्टौ पिण्डान् कृत्वा "ऋत-
मग्रे" इत्यनेन मृत्पिण्डानभिमन्त्र्य कुमारीं ब्रूयादेषामेकं गृहा-
णेति । पुनःपिण्डग्रहणं कुमार्य्या अभिमन्त्रणं माभूत् । सापि
हि द्वितीया निर्दिष्टा ॥ ५ ॥

चेत्राच्चेदुभयतःशस्याद्गृह्णीयादन्नवत्यस्याः प्रजा भविष्यतीति विद्याद्गोष्ठात् पशुमती वेदिपुरीषाद् ब्रह्मवर्चस्विन्यविदासिनो ह्रदात् सर्वसम्पन्ना देवनात्कितवी चतुष्पथाद्द्विप्रव्राजिनीरिणादधन्या श्मशानात् पतिघ्नी ॥ ६ ॥

उभयतःशस्यात् चेत्रादाहृतं मृत्पिण्डं गृह्णीयात् चेत् अस्याः प्रजा अन्नवती भविष्यतीति विद्यात्। एवमुत्तरत्रापि नेयम्। यदेकस्मिन् संवत्सरे द्विः फलति तदुभयतःशस्यं चेत्रम्। अपवृत्ते कर्मणि या वेदिस्तस्याः पुरीषम्। अविदासिह्रदो नामाऽशोष्यं ह्रदम्। देवनं द्यूतस्थानम्। यत्रोप्तबीजं न प्ररोहति तदिरिणम्। द्वौ प्रव्रजतीति द्विप्रव्राजिनी। स्वैरिणीति यावत्। पतिं हन्तीति पतिघ्नी। अत्र प्रजास्तुतिनिन्दाद्वारेण सैव स्तुता निन्दिता चेति मन्तव्यम्। उत्तरैस्त्रिभिर्वाक्यैः सैव निन्द्यते ॥ ६ ॥

इति प्रथमे पञ्चमी कण्डिका ॥

---

अथ षष्ठी कण्डिका।

अलंकृत्य कन्यामुदकपूर्वां दद्यादेष ब्राह्मो विवाहः। तस्यां जातो द्वादशावरान् द्वादश परान् पुनात्युभयतः। ऋत्विजे वितते कर्मणि दद्यादलंकृत्य स दैवो दशावरान् दश परान् पुनात्युभयतः। सह धर्मं चरतं इति प्राजापत्यो-

ऽष्टावरानष्ट परान् पुनात्युभयतः। गोमिथुनं दत्त्वोपयच्छेत स आर्षः सप्तावरान् सप्त परान् पुनात्युभयतः। मिथः समयं कृत्वोपयच्छेत स गान्धर्वः। धनेनोपतोष्योपयच्छेत स आसुरः। सुप्तानां प्रमत्तानां वापहरेत् स पैशाचः। हत्वा भित्त्वा च शीर्षाणि रुदतीं रुदद्भ्यो हरेत् स राक्षसः॥ १॥

कन्यामलङ्कृत्य उदकपूर्वां दद्यात्। एष विवाहो ब्राह्मसंज्ञो भवति। तस्यां कन्यायां जातो द्वादशाऽवरानुत्पत्स्यमानान् द्वादश परान् पुनाति। उभयतो मातृतः पितृतश्चेत्यर्थः। एवमुत्तरत्रापि नेयम्। वितते कर्मणीति वैतानिके कर्मणीत्यर्थः। मिथःसमयकरणं नाम त्वं मम भार्य्या भव अहं तव पुरुषो भवामीत्येवंरूपो विवाहो गान्धर्वसंज्ञः। कन्यापित्रे धनदानेन यो विवाहः स आसुरसंज्ञः। सुप्तेभ्यः प्रमत्तेभ्योऽसावधानेभ्यः कन्यामपहृत्य यो विवाहः स पिशाचसंज्ञकः। युद्धं कृत्वा कन्यामपहृत्य यो विवाहः स राक्षससंज्ञकः। एवमेतेऽष्टौ विवाहाः। तत्र पूर्वेषु चतुर्षु पूर्वः पूर्वः प्रशस्तः। उत्तरेषु चतुर्षु उत्तरोत्तरः पापीयान्। तत्र पूर्वौ ब्राह्मणस्य। इतरयोः प्रतिग्रहाभावात् आर्त्विज्याभावाच्च। गान्धर्वः क्षत्रियस्य, पुराणे दृष्टत्वात्। राक्षसश्च तस्यैव, युद्धसंयोगात्। आसुरस्तु वैश्यस्य, धनसंयोगात्। इतरे त्रयोऽनियताः॥ १॥

इति प्रथमे षष्ठी कण्डिका॥

अथ सप्तमी कण्डिका ।

**अथ खलूच्चावचा जनपदधर्मा ग्रामधर्माश्च तान् विवाहे प्रतीयात् ॥ १ ॥**

अथशब्दोऽधिकारार्थः । यद्वक्ष्यते तद्विवाहे वेदितव्यमिति । खलूक्तः । उच्चावचग्रहणं कथम् । एते जनपदधर्मादयो नानाप्रकाराः क्रियेरन् नैकेन कर्त्रा समुच्चेरन्निति । जनपदधर्मा देशधर्माः । ग्रामशब्देन नगरमुच्यते । धर्मशब्दादेव द्वितीयानिर्देशे सति अन्वये सिद्धे तानितिवचनं कुलधर्मा अपि कार्य्या इत्येवमर्थम् । तान् तादृशानित्यर्थः । विवाहाधिकारे पुनर्विवाहग्रहणं कृत्स्ने विवाहे यथा स्युरित्येवमर्थम् । इतरथोपयमनकालादुत्तरकालं विहितत्वादुपयमने न स्युः । उपयमनं नाम कन्यायाः स्वीकरणम् । प्रतीयादिति कुर्य्यादित्यर्थः ॥ १ ॥

**यत् तु समानं तद्वक्ष्यामः ॥ २ ॥**

किमर्थमिदम् । यथा अन्यान्युपदेशादेव सर्वत्र भवन्ति पार्वणादीनि तथेदमपि स्यात् । नियमार्थं तर्हि जनपदादिधर्माणां वक्ष्यमाणधर्माणां च विरोधे सति वक्ष्यमाणमेव धर्मं कुर्य्यात् । जनपदादिधर्ममिति यद्वक्ष्यामस्तत् सर्वत्र समानमेवेत्यर्थः । वैदेहेषु सद्य एव व्यवायो दृष्टः । गृह्ये तु "ब्रह्मचारिणौ त्रिरात्रम्" इति ब्रह्मचर्य्यं विहितम् । तत्र गृह्योक्तमेव कुर्य्यात् न देशधर्ममिति सिद्धम् ॥ २ ॥

**पश्चादग्नेर्दृषदमश्मानं प्रतिष्ठाप्योत्तरपुरस्तादुदकुम्भं समन्वारब्धायां हुत्वा तिष्ठन् प्रत्यङ्मुखः प्राङ्मुख्या आसीनाया गृह्णामि ते सौभगत्वाय**

**हस्तमित्यङ्गुष्ठमेव गृह्णीयाद्यदि कामयीत पुमांस एव मे पुत्रा जायेरन्निति ॥ ३ ॥**

अग्निप्रतिष्ठापनोत्तरकालं पश्चादग्नेर्दृषदमश्मानं प्रतिष्ठाप्य उत्तरपूर्वदेशे उदकुम्भं प्रतिष्ठापयेत्। तत आज्यस्य बर्हिषि सादनान्तं कृत्वा समन्वारब्धायां वध्वां इध्माभ्याधानान्तं कृत्वा ततः पूर्वोक्ता आज्याहुतीर्हुत्वा तिष्ठन् प्रत्यङ्मुखः प्राङ्मुख्या आसीनाया अङ्गुष्ठमेव गृह्णीयात् गृह्णामीत्युक्त्वा पुत्रकामश्चेत्। मन्त्रस्तूत्तरयोरपि हस्तग्रहणयोर्भवत्येवायम्। दृषत् प्रसिद्धा। अश्मा तत्पुत्रकः। तत्रोभयोः प्रतिष्ठापनं सिद्धम्। एवं चेत् दोषः। "अश्मानमारोहयति" [गृ० १।७।७] इत्यत्र पुत्रकारोहणं स्यात्। तर्हि अश्मग्रहणं तस्य विशेषणं स्यात्। दृषदमश्मानमिति अश्ममयीमित्यर्थः। मृण्मय्यपि हि लोके दृश्यते। तर्हि पुत्रकप्रतिष्ठापनं न स्यात्। न। स्यादेव मङ्गलार्थत्वात्। दक्षिणतः पत्नी उपविशेत्, उत्तरतः पतिरिति शाखान्तरे दृष्टम्। स्रुवेण होमः साधनान्तराऽनुपदेशात्। एवम्भूतो व्यक्तहोमेऽत्रनेनैवावस्थाने सिद्धे "तिष्ठन् समिधमादध्यात्" [श्रौ०] इत्यत्र तिष्ठन्-ग्रहणं कथम्। अन्यत्रासीनस्य कर्माणि स्युरित्येवमर्थम्। ततोऽत्राप्यासीनप्राप्तौ तन्निवृत्त्यर्थं तिष्ठन्-ग्रहणम्। प्रत्यङ्मुख इति प्राङ्मुखत्वनिवृत्त्यर्थम्। "तस्य नित्याः प्राच्यश्चेष्टाः [श्रौ० १।१।८] इत्यनेन प्राङ्मुखत्वे सिद्धे प्राङ्मुख्या आसीनाया इति वचनं प्रत्यङ्मुखाधिकारनिवृत्त्यर्थम्। आसीनाया इत्येतत् कथम्। इत उत्तरं वध्वा विहितं कर्म तिष्ठन्त्या स्यादित्येवमर्थम्। 'उत्तानेनोत्तानं पाणिं गृह्णीयात् नीचेन चोत्तानम्" इति शाखान्तरे दृष्टम्। पुत्रशब्दः पुंसि स्त्रियाञ्च स्मृतौ दृष्टः।

"अकृता वा कृता वापि यं विन्देत् सदृशात् सुतम् ।
पौत्री मातामहस्तेन दद्यात् पिण्डं हरेद्धनम् ॥

इति ॥ [मनुः ९।१३६]

दौहित्रेण मातामहः पौत्री भवति इत्यर्थः। लोके च दुहितरि पुत्रशब्दं प्रयुञ्जाना दृश्यन्ते एहि पुत्रेति। मन्त्रे च दृश्यते। "पुमांस्ते पुत्रा जायताम्" इति। तस्मात् पुमांसः पुत्रा इति विशेषणम्। अथवा।

पुन्नाम्नो नरकात् यस्मात् पितरं त्रायते सुतः।
तस्मात् पुत्र इति प्रोक्तः स्वयमेव स्वयम्भुवा ॥ इति ॥

[मनुः ९।१३८]

एवंविधः स पुत्रो जायेत न प्रथमप्रकृतिमात्रमित्येवमर्थ-मुभयोर्ग्रहणम् ॥ ३ ॥

अङ्गुलीरेव स्त्रीकामः ॥ ४ ॥

एवकारोऽङ्गुष्ठनिवृत्त्यर्थः। स्त्रीकामो दुहितृकाम इत्यर्थः ॥ ४ ॥

रोमान्ते हस्तं साङ्गुष्ठमुभयकामः ॥ ५ ॥

उभयकामः पुत्रदुहितृकामः अङ्गुष्ठाङ्गुलीभिः सह हस्तं गृह्णीयात् ॥ ५ ॥

प्रदक्षिणमग्निमुदकुम्भञ्च त्रिः परिणयन् जपति। अमोहमस्मि सा त्वं सा त्वमस्यमोहं द्यौरहं पृथिवी त्वं सामाहमृक् त्वं तावेह विवहावहै प्रजां प्रजनयावहै सम्प्रियौ रोचिष्णू सुमनस्यमानौ जीवेव शरदः शतमिति ॥ ६ ॥

अग्निमुदकुम्भञ्च त्रिःप्रदक्षिणं वधूः स्त्रीः परिणयन् जपति। अमोऽहमस्मीति। उदकुम्भग्रहणमन्येषां यज्ञपात्राणां बहिःकरणार्थमित्येके। अन्ये तु विवाहे यदन्यद् दृष्टं पात्रं अश्मा तस्येत्र बहिःकरणार्थमिति। त्रिग्रहणं परिणयनेन सम्बध्यते उत जपेन ?। यदि पूर्वेण तर्हि सकृज्जपः स्यात्। अथ जपेन तर्हि सकृत् परिणीतिः। पूर्वेणेति ब्रूमः। कुतः। परिणीय परिणीयेति तस्य बहुत्वं दर्शितम्। जपश्च परिणयाङ्गमिति कृत्वा यावत् परिणयनमावर्त्तते ॥ ६ ॥

## परिणीय परिणीयाश्मानमारोहयतीममश्मानमारोहाश्मेव त्वं स्थिरा भव। सहस्व पृतनायतोऽभितिष्ठ प्रतन्यत इति ॥ ७ ॥

वीप्सावचनं सर्वपरिणयनेष्वश्मानमारोहणं कारयितव्यमित्येतदर्थम्। अथास्य कर्मणः कः कर्त्ता। आचार्य्यः। कुतः। वक्ष्यति। "शिरसो उदकुम्भेनावसिच्य" [गृ० १।७।२०] इति। स्वयं कर्त्तृत्वे सति अवसेचनं कर्त्तुं न शक्यते। तदसत्। आचार्य्येण ह्ययं विसृष्टो विवाहं करोति। उदकुम्भग्रहणान्तु तत्रस्थमुदकुम्भं लक्षयति ॥ ७ ॥

## वध्वञ्जला उपस्तीर्य्य भ्राता भ्रातृस्थानो वा द्विर्लाजानावपति ॥ ८ ॥

ततो वध्वञ्जलौ उपस्तीर्य्य वध्वा भ्रात्रादिर्द्विर्लाजानावपति। वरो जामदग्न्यश्चेत्त्रिः। ततः शेषं प्रत्यभिघार्य्य अवदानं च प्रत्यभिघारयति। एवमवदायावदाय त्रिभिर्मन्त्रैर्जुहोति। भ्रातृस्थानः पितृव्यपुत्रो मातुलपुत्रश्च ॥ ८ ॥

## त्रिर्जामदग्न्यानाम् ॥ ९ ॥

प्रयोजनवत्त्वाच्च। तच्च पूर्वपक्षनिवृत्त्यर्थम्। एवमित्यक्षतप्रो-पदेशार्थम्। तेनान्वष्टक्यमिहातिदिश्यते, अनन्तरत्वात्। पितृभ्य इति मातृनिवृत्त्यर्थम्। प्रतिष्ठापयेत् कुर्य्यादित्यर्थः। एतदुक्तं भवति। प्रतिमासमपरपक्षे अयुग्मासु तिथिषु अन्व-ष्टक्यवत् पितृभ्य एव श्राद्धं कुर्य्यादिति। समानकालत्वात् समानकार्य्यत्वाच्च पार्वणस्यास्य विकल्पः। एवं वा सूत्रच्छेदः। मासि मासि चैवं पितृभ्यः प्रतिमासमपरपक्षे अन्वष्टक्यवत् पितृभ्य एव कुर्य्यादित्यर्थः। अयुक्षु प्रतिष्ठापयेत्। श्राद्धकर्मणि सर्वमयुग्मासु संख्यासु प्रतिष्ठापयेत्, गन्धमाल्यादि सकृद्द्विस्त्रिः पञ्चकृत्वो वेत्यादि ॥ १० ॥

## नवावरान् भोजयेत् ॥ ११ ॥

नवप्रसङ्गः प्रकृतं निवर्त्तयति। तेनान्वष्टक्ये नवावरान् भोजयेन्नियमेन ॥ ११ ॥

## अयुजो वा ॥ १२ ॥

अशक्तौ प्रागप्ययुजो भोजयेत् सप्त पञ्च त्रीनेकं वा। सप्त-पक्षे एकस्यैक इतरयोस्त्रयस्त्रयः, पञ्चपक्षे एकस्य त्रय इतर-योरेकैकः। इदं चान्वष्टक्य एव ॥ १२ ॥

## युग्मान् वृद्धिपूर्त्तेषु ॥ १३ ॥

"पुंसवनसीमन्तोन्नयनचौलकर्मोपनयनविवाहा इति पञ्चाग्न्याधेयादीनि च श्रौतानि वृद्धिश्राद्धस्य विषयः" इत्येके। "अन्ये षोडश संस्काराः श्रवणाकर्मादयश्च श्रौतानि च" इत्याहुः। "अनिष्ट्वा तु पितॄन् श्राद्धे वैदिकं कर्म नारभेत्" इति स्मृतेः। वापीकूपतडागारामाद्युत्थापनादिपूर्त्तश्राद्धस्य विषयः। उभयत्र युग्मान् भोजयेत् ॥ १३ ॥

## अयुग्मानितरेषु ॥ १४ ॥

पूर्वेद्युरष्टम्यां काम्य एकोद्दिष्ट इति चतुर्थोऽयं विधिः, मासि मासि चेत्यत्रान्वष्टक्यवत्। पार्वणे तु वक्ष्यति। एवमष्टविधेष्वपि श्राद्धेषु ब्राह्मणपरिमाणमुक्तम् ॥ १४ ॥

प्रदक्षिणमुपचारो यवैस्तिलार्थः ॥ १५ ॥

वृद्धिपूर्त्तेष्विति शेषः। अत्र प्रदक्षिणमिति वचनादितरश्राद्धेषु प्रसव्यमुपचार इति गम्यते। तिलकार्य्ये यवान् कुर्यात्। यज्ञोपवीतयुग्मकर्मादीनामुपलक्षणमिदम् ॥ १५ ॥

इति द्वितीये पञ्चमी कण्डिका ॥

अथ षष्ठी कण्डिका ॥

रथमारोक्ष्यन्नाना पाणिभ्यां चक्रे अभिमृशेत्, अहन्ते पूर्वे पादावालभेद् बृहद्रथन्तरे ते चक्रे ॥ १ ॥

इतिकारोऽध्याहार्य्यः। त्रयाणां वर्णानामिदं समानं भवति। रथो नाम बहुयुगो मण्डलाकृतिः। यदा रथमारोहति गमनार्थं ततः पूर्वपक्षे चक्रे पाणिभ्यां नाना अभिमृशेत् मन्त्रेण। नानाग्रहणं युगपदेव दक्षिणेन दक्षिणं सव्येन सव्यमभिमृशेन्न पर्य्यायेणेत्येवमर्थम्। दूरदेशगमने त्वाद्य एवारोहणेऽयं विधिर्नत्वर्थप्राप्तेष्वारोहणेषु ॥ १ ॥

वामदेव्यमङ्ग इत्यक्षाधिष्ठाने ॥ २ ॥

अभिमृशेदिति वर्त्तते। पाणिभ्यां युगपच्चक्रनाभी अभिमृशेत् मन्त्रेण ॥ २ ॥

**दक्षिणपूर्वाभ्यामारोहेत्, वायोष्ट्वा वीर्य्येणा-रोहामीन्द्रस्यौजसाधिपत्येनेति ॥ ३ ॥**

दक्षिणापादः पूर्वौ ययोः तौ तथोक्तौ, एवम्भूताभ्यामारोहेन्मन्त्रेण ॥ ३ ॥

**रश्मीन् संमृशेदरश्मिकान् वा दण्डेन, ब्रह्मणो वस्तेजसा संगृह्णामि सत्येन वस्तेजसा संगृह्णामीति ॥ ४ ॥**

रश्मयः प्रग्रहास्तान् स्पृशेत्। अथ यद्यश्वा अरश्मिकाः स्युस्तानेव दण्डेन स्पृशेत्। मन्त्रस्तूभयत्र। बहुवचनाद्बहुयुगो रथोऽत्राभिप्रेत इति गम्यते ॥ ४ ॥

**अभिप्रवर्त्तमानेषु जपेत्, सहस्रसनिं वाजमभिवर्त्तस्व रथ देव प्रवह वनस्पते वीड्वङ्गो हि भूया इति ॥ ५ ॥**

चशब्दोऽध्याहार्य्यः। सारथिना नोदिता अश्वा यदा इष्टां दिशमभिगच्छन्ति तदा सहस्रसनिं वनस्पत इत्यृचं जपेत्। एतावद्रथारोहणम् ॥ ५ ॥

**एतयाऽन्यान्यपि वानस्पत्यानि ॥ ६ ॥**

अभिमृशेदिति शेषः। अन्यान्यपि शकटप्रभृतीनि वानस्पत्यान्यारोक्ष्यन्नेतया तान्यभिमृशेत्। एतयेत्यस्मिन्नसति अन्यान्यपीत्याद्युत्तरसूत्रस्यैव शेषः स्यात्, तस्माद्योगविभागार्थमेतयेति वचनम् ॥ ६ ॥

**स्थिरौ गावौ भवतां वीडु रक्ष इति रथाङ्गमभिमृशेत् ॥ ७ ॥**

यद्यदङ्गमस्यामृचि दृष्टं तत्तदभिमृशेत्। गावौ अक्षं ईषां युगं चेत्यर्थः। इदञ्चाभिमर्शनं शकटादिषु न रथे, गावाविति लिङ्गात्। न हि रथस्य गोयुक्तत्वं द्विगोयुक्तत्वं च सम्भवति, बहुयुगत्वादश्वयुक्तत्वाच्च ॥ ७ ॥

सुत्रामाणं पृथिवीं द्यामनेहसमिति नावम् ॥ ८ ॥

आरोहेदिति शेषः, आरुहेमेति मन्त्रलिङ्गात्। यदा यदा च नावमारोहति उदकतरणार्थं तदा तदा एतयाऽऽरोहेत् ॥ ८ ॥

नवरथेन यशस्विनं वृक्षं कृतं वा विदासिनं प्रदक्षिणं कृत्वा फलवतीः शाखा आहरेत् ॥ ९ ॥

नवरथेन यदा गच्छति तदायं विशेषः। यानस्पत्यजपान्तं कृत्वा इदमपि कुर्य्यात्। नवोऽनुपभुक्तः। यशस्वी यशसा युक्तः। अविदासी अशोष्यः। आम्रजम्ब्वादिशाखा आहरेत् ॥ ९ ॥

अन्यदा कौटुम्बम् ॥ १० ॥

अन्यदा कुटुम्बोपयोगि द्रव्यमाहरेत्। आहृत्य ततः ॥१०॥

संसदमुपयायात् ॥ ११ ॥

गृहसमीपमागच्छेदित्यर्थः ॥ ११ ॥

अस्माकमुत्तमं कृधीत्यादित्यमीक्षमाणो जपित्वाऽवरोहेत् ॥ १२ ॥

जपित्वा नवरथादवरोहेत् ॥ १२ ॥

ऋषभं मा समानानामित्यभिक्रामन् ॥ १३ ॥

एतत् सूक्तं गृहं प्रतिपद्यमानो जपेत् ॥ १३ ॥

**वयमद्येन्द्रस्य प्रेष्ठाद्व्यस्तं यात्यादित्ये ॥१४॥**

जपेदिति शेषः। तस्मिन्नेवाहनि ॥ १४ ॥

**तद्वो दिवो दुहितरो विभातीरिति व्युष्टायाम् ॥ १५ ॥**

जपेत्। त्रीण्येतानि प्रतीकानि मन्त्रसंज्ञकानि। तस्मादुपांशु स्युः। एतावान् नवरथे विशेषः ॥ १५ ॥

इति द्वितीये षष्ठी कण्डिका ॥

---

अथ सप्तमी कण्डिका ॥

**अथातो वास्तुपरीक्षा ॥ १ ॥**

उच्यत इति शेषः। उक्तोऽर्थः। अतःशब्दो हेत्वर्थः। यस्मात् गृहनिमित्ते समृद्धिव्यृद्धी भवतः तस्माद्वास्तुपरीक्षोच्यत इति। यद्येवं काम्यकर्माण्यनर्थकानि नैतदेवं न्यायविदः परिहरन्ति। "तच्चैव हि कारणं शब्दस्येति" एवंलक्षणयुक्ते देशे वास्तु कार्य्यमित्याह ॥ १ ॥

**अनूषरमविवदिष्णु भूम ॥ २ ॥**

भूमशब्दो भूमिवाचकः। यथा यवं न वृष्टिर्व्युनत्ति भूमेति यत्र विवादो नास्ति तदविवदिष्णु ॥ २ ॥

**ओषधिवनस्पतिवत् ॥ ३ ॥**

मतुपो वकारश्छान्दसः। एवंविधं यद् भूम तत्र वास्तु कार्य्यम् ॥ ३ ॥

**यस्मिन् कुशवीरिणप्रभूतम् ॥ ४ ॥**

तत्र कार्य्यम् ॥ ४ ॥

**कण्टकिक्षीरिणस्तु समूलान् परिखायोद्वा-**

**सयेदपामार्गः शाकस्तिल्वकः परिव्याध इति चैतानि ॥ ५ ॥**

समूलान् परिखायोद्वासयेदिति वर्त्तते। अपामार्गादीनां पुंलिङ्गत्वादेतानिति वक्तव्ये एतानीति नपुंसकवचनमन्यान्यप्येवम्प्रकाराणि वास्तुविद्यायां निषिद्धान्युद्वास्यानीत्येवमर्थम् ॥५ ॥

**यत्र सर्वत आपो मध्यं समेत्य प्रदक्षिणं शयनीयं परीत्य प्राच्यः स्यन्देरन्नप्रवदत्यस्तत्सर्वं समृद्धम् ॥६॥**

यस्मिन् देशे आपः सर्वाभ्यो दिग्भ्यः आगत्य मध्यं प्राप्य ततः प्रदक्षिणं शयनीयं परीत्य प्राङ्मुख्यो गच्छेयुः । अप्रवदत्यः नलोपः छान्दसः । अशब्दवत्य इत्यर्थः । एतल्लक्षणयुक्तं वास्तु विद्यावृत्तधनधान्यादिभिः सर्वैः समृद्धं भवति। एवं ब्रुवता एतत् प्रदर्शितं भवति। सर्वत उच्छ्रितां मध्यतो निम्नामीषच्च प्राक्प्रवणां भूमिं कृत्वा गृहं कुर्य्यात् । तत्र प्राच्यां दिशि गृहिणः शयनीयं गृहं कुर्य्यात्। शयनीयगृहस्योत्तरतोऽपां शनैः प्रदक्षिणं निर्गमनार्थं स्यन्दनिकां कुर्य्यादिति ॥ ६ ॥

**समवस्रवे भक्तशरणं कारयेत् ॥ ७ ॥**

येन पथा आपो निर्गच्छन्ति स देशः समवस्रवः । प्राच्यां दिशीत्यर्थः । तत्र महानसं कारयेत् शयनीयस्योत्तरतः । ननु शाखान्तरे प्राग्दक्षिणस्यां दिशि भक्तशरणं दृष्टमतः कथं प्राच्यां दिशीत्याशङ्क्य प्रकृतस्य स्तुतिमाह ॥ ७ ॥

**बह्वन्नं भवति ॥ ८ ॥**

ऋद्धिमद्भवतीत्यर्थः । तस्मादत्रैव कार्य्यम् ॥ ८ ॥

**दक्षिणाप्रवणे सभां मापयेत् साऽद्यूता ह भवति ॥ ९ ॥**

यत्र गृही स्वैरमास्ते स्वजनैरागन्तुभिश्च सह सा सभा तां दक्षिणाप्रवणे कुर्य्यादुदीच्यां दिशीत्यर्थः। तत्र कृताऽद्यूता द्यूतवर्जिता भवति। दोषाश्च सन्तीत्याह ॥ ९ ॥

**युवानस्तस्यां कितवाः कलहिनः प्रमायुका भवन्ति ॥ १० ॥**

अत्र कृता चेत् युवान एव सन्तः प्रमायुका भवन्ति। अल्पायुषो म्रियन्त इत्यर्थः। कलहप्रियाश्च कितवाश्च भवन्ति। ननु द्यूतवर्जितत्वात् कथं कितवा इति। उच्यते। कितवा इति दाम्भिन इत्यर्थः। तस्मात् तत्र न कार्य्या, ग्रामान्तरेऽविहितत्वादस्य प्रतिपिद्धवान्। क्व तर्हि कार्य्येत्याह ॥ १० ॥

**यत्र सर्वत आपः प्रस्यन्देरन् सा स्वस्त्ययन्यद्यूता च ॥ ११ ॥**

यस्मिन् देशे सर्वाभ्यो दिगभ्यो ऽाप आगच्छन्ति तत्र कार्य्या सभा, गृहमध्य इत्यर्थः। सा शुभकारी अद्यूता च भवति ॥ ११ ॥

इति द्वितीये सप्तमी कण्डिका ॥

---

अथ अष्टमी कण्डिका ॥

**अथैतैर्वास्तु परीक्षेत ॥ १ ॥**

पूर्वलक्षणासम्भवे कथमुत्तरेषां बलीयस्त्वं स्यादित्येवमर्थोऽथशब्दः। अथ विशिष्टान्येतानीति। वास्तुग्रहणं सभाधिकारनिवृत्त्यर्थम् ॥ १ ॥

जानुमात्रङ्गर्त्तं खात्वा तैरेव पांशुभिः प्रति-
पूरयेत् ॥ २ ॥

गर्त्तो नामावटः, तैरेव। तत उद्धृतैरेव ॥ २ ॥

अधिके प्रशस्तं समे वार्त्तं न्यूने गर्हितम् ॥३॥

पूरिते गर्त्तादधिके पांशुराशौ प्रशस्तं वास्तु भवति। तेन
समे वृत्तिमद्भवति। तस्मात् न्यूने गर्हितं कुत्सितं भवति
तस्मात् तत्र न कार्य्यम् ॥ ३ ॥

अस्तमिते पांशुपूर्णां परिवासयेत् ॥ ४ ॥

अस्तमिते तमेव गर्त्तमद्भिः पूरयित्वा तां रात्रिं परिवास-
येत्। ततो व्युष्टायां निरीक्षेत ॥ ४ ॥

सोदके प्रशस्तमार्द्रे वार्त्तं शुष्के गर्हितं
श्वेतं मधुरास्वादम् ॥ ५ ॥

पूर्वेण तुल्यम् ॥ ५ ॥

सिकतोत्तरं ब्राह्मणस्य ॥ ६ ॥

सिकतोत्तरं सिकताबहुलमित्यर्थः ॥ ६ ॥

लोहितं क्षत्रियस्य ॥ ७ ॥

मधुरास्वादं सिकतोत्तरमिति वर्त्तते ॥ ७ ॥

पीतं वैश्यस्य ॥ ८ ॥

अत्रापि द्वयं वर्त्तते। श्वेतं लोहितं पीतमिति त्रयो वर्णाः
त्रयाणां वर्णानां विशेषाः। अन्यत् सर्वं समानम् ॥ ८ ॥

तत् सहस्रसीतं कृत्वा यथादिक् समचतु-
रस्रं मापयेत् ॥ ९ ॥

एवं परीक्षितं वास्तु बहुसीतं कुर्य्यात्। बहुभिः सीतया

कर्षेदित्यर्थः। ततः सर्वासु दिक्षु समचतुरस्रं स्थण्डिलं कुर्य्यात्। चतुरस्रं चतुःकोणं मापयेत् कुर्य्यात्। सहस्रशब्दोऽत्र बहुवाची ॥ ९ ॥

आयतं चतुरस्रं वा ॥ १० ॥

प्रागायतं चतुरस्रं वा कुर्य्यात्, आयतं दीर्घम्। तत्रैवं क्रमः, परिव्याध इति चैतानोत्यन्तां बाह्यवास्तुपरीक्षां कृत्वा तत्र आन्तरीं परीक्षामथैतैर्वास्तु परीक्षेतेत्यादिं आयतं चतुरस्रं वेत्यन्तां कृत्वा यत्र सर्वत आपो मध्यं समेत्येत्यादि विज्ञेयम्। ततो वक्ष्यमाणं प्रोक्षणं कुर्य्यात् ॥ १० ॥

तच्छमीशाखयोदुम्बरशाखया वा शन्तातीयेन त्रिः परिव्रजन् प्रोक्षति ॥ ११ ॥

"शन्न इन्द्राग्नी" इति सूक्तं शन्तातीयमिति प्रसिद्धं, तेन सूक्तेन त्रिः परिव्रजन् प्रोक्षति। सर्वत्र मन्त्रान्ते कर्मारम्भः सिद्धं हि करणं भवति नासिद्धं, परशुना छिनत्तीति परशुवत्। तन्नाष्टेसिकक्ता, "मन्त्रान्ते व्रजनारम्भः प्राचीमारभ्य पर्य्येति" इति ॥ ११ ॥

अविच्छिन्नया चोदकधारया, आपो हि ष्ठा मयो भुव इति तृचेन ॥ १२ ॥

त्रिः प्रदक्षिणं परिव्रजति। अत्रापि धारावृत्तिस्तृचावृत्तिश्च, व्रजनगुणत्वात् ॥ १२ ॥

वंशान्तरेषु शरणानि कारयेत् ॥ १३ ॥

यावन्तस्तत्र वंशाः सम्भवन्ति तत्र द्वयोर्द्वयोर्वंशयोरन्तरेषु कुड्यादिभिः पृथक्कृत्य अपवरकादिशरणानि कारयेत्। शरणान्यवान्तरगृहाणि ॥ १३ ॥

गर्त्तेष्ववकाशोपालमित्यवधापयेत्, नास्याग्निर्दाहुको भवतीति विज्ञायते ॥ १४ ॥

सर्वासां स्थूणानां गर्त्तेषु अवकाशोपालं च अवदध्यात्। एवं कृते नास्याग्निर्दाहको भवति इति श्रूयते ॥ १४ ॥

मध्यमस्थूणाया गर्त्तेऽवधाय प्रागग्रोदग्रान् कुशानास्तीर्य्य व्रीहियवमतीरप आसिचयेत्, अच्युताय भौमाय स्वाहेति ॥ १५ ॥

अस्या गर्त्ते अयं विशेषः। अवकाशोपालश्चावधाय कुशानास्तीर्य्य पश्चादासिञ्चेन्मन्त्रेण। अवधायवचनं अवकाशोपालयोरवधानप्राप्त्यर्थम् ॥ १५ ॥

अथैनामुच्छ्रीयमाणामनुमन्त्रयेत इहैव तिष्ठ निमिता तिल्विलास्वामिरावती मध्ये पोषस्य तिष्ठन्तीम्। आ त्वा प्रापन्नघायव आ त्वा कुमारस्तरुण आ वत्सो जायतां सह। आ त्वा परिश्रितः कुम्भ आ दध्नः कलशैरयन्निति ॥ १६ ॥

मध्यमस्थूणां गर्त्ते आधीयमानां अनुमन्त्रयेत मन्त्राभ्याम् ॥ १६ ॥

इति द्वितीये अष्टमी कण्डिका ॥

---

अथ नवमी कण्डिका ॥

वंशमाधीयमानम् ॥ १ ॥

अनुमन्त्रयेतेति वर्त्तते ॥ १ ॥

ऋतेन स्थूणामधिरोह वंश द्राघीय आयुः प्रतरन्दधाना इति ॥ २ ॥

अनेन मध्यमस्थूणाया उपर्य्याधीयमानं वंशमनुमन्त्रयेत। अन्ये तु प्रतिवंशमावृत्तिमिच्छन्ति ॥ २ ॥

सदूर्वासु चतसृषु शिलासु मणिकं प्रतिष्ठापयेत्, पृथिव्या अधि सम्भवेति ॥ ३ ॥

चतस्रः शिलाः स्थापयित्वा तासु दूर्वां निधाय ततो मणिकं प्रतिष्ठापयेत् मन्त्रेण। मणिको नाम जलधारणार्थो भाण्डविशेषः ॥ ३ ॥

अरङ्गरो वावदीति त्रेधा बद्धो वरत्रया। इराम्रु ह प्रशंसत्यनिरामपबाधतामिति वा ॥४॥

अनया वा प्रतिष्ठापयेत् ॥ ४ ॥

अथास्मिन्नप आसेचयेत्, एतु राजा वरुणो रेवतीभिरस्मिन् स्थाने तिष्ठतु मोदमानः। इरां वहन्तो घृतमुक्षमाणा मित्रेण साकं सह संविशन्त्विति ॥ ५ ॥

अथ मणिके अपो निषिञ्चति पूरणार्थं मन्त्रेण ॥ ५ ॥

अथैनच्छमयति ॥ ६ ॥

एतद्वास्तु शान्तं करोति। कथं, इत्यामित्याह ॥ ६ ॥

व्रीहियवमतीभिरद्भिर्हिरण्यमवधाय शान्तातीयेन त्रिः प्रदक्षिणं परिव्रजन् प्रोक्षति ॥७॥

अप्सु हिरण्यमवधाय ताभिः प्रोक्षति ॥ ७ ॥

**अविच्छिन्नया चोदकधारया, आपो हि ष्ठा मयोभुव इति तृचेन ॥ ८ ॥**

उक्तार्थे द्वे सूत्रे ॥ ८ ॥

**मध्येऽगारस्य स्थालीपाकं श्रपयित्वा, वास्तोष्पते प्रतिजानीह्यस्मानिति चतसृभिः प्रत्यृचं हुत्वाऽन्नं संस्कृत्य ब्राह्मणान् भोजयित्वा, शिवं वास्तु शिवं वास्त्विति वाचयीत ॥ ९ ॥**

श्रपयित्वेतिवचनं अस्मात् स्थालीपाकात् प्रागस्मिन् गृहे पाकान्तरं न श्रपयितव्यमित्येवमर्थम्। भुक्तवतो ब्राह्मणान् शिवं वास्तु शिवं वास्त्विति भवन्तो ब्रुवन्त्विति वाचयीत। ते च तं शिवं वास्तु शिवं वास्त्विति प्रत्यूचुः। उक्तार्थमन्यत् ॥९॥

इति द्वितीये नवमी कण्डिका ॥

अथ दशमी कण्डिका ॥

**उक्तं गृहप्रपदनम् ॥ १ ॥**

यदुक्तं गृहप्रपदनं प्रपद्येत गृहानहं सुमनस इत्यादि तदिदानीमिहापि कार्य्यमित्यर्थः। अन्ये तु प्राहुः यदुक्तं मणिकप्रतिष्ठापनादि, शिवं वास्त्वित्यन्तं तद्गृहप्रपदनसंज्ञं भवति। किं सिद्धं भवति, मणिकस्थापनात् प्रागेव बीजानि स्थापयित्वा तूष्णीं प्रविशेदिति। अपिच शास्त्रान्तरेण संस्कृतं विशीर्णं वा पुराणं गृहं संस्कृत्य प्रविशतो मणिकप्रतिष्ठापनादि सिध्यति ॥ १ ॥

**बीजवतो गृहान् प्रपद्येत ॥ २ ॥**

गृहानिति बहुवचनं आप इतिवत्। बीजवतः प्रपद्येतेत्येतावतैव सिद्धे गृहानिति वचनं यत्र गृहं प्रविशति शास्त्रान्तरसंस्कृतं विशीर्णं वा संस्कृत्य तत्रापि एवं प्रविशेदिति मणिकादि बीजवत्प्रपदनान्तं तत्रापि कुर्य्यादित्यर्थः। तेन पूर्वव्याख्यापि साध्वी ॥ २ ॥

**क्षेत्रं प्रकर्षयेदुत्तरैः प्रोष्ठपदैः फाल्गुनीभी रोहिण्या वा ॥ ३ ॥**

फाल्गुनीभिरित्यत्रापि उत्तराभिरित्येवं सम्बध्यते। तेन त्रीणि नक्षत्राणि। नित्यकर्मणां द्रव्यसाध्यत्वात् द्रव्यार्थं क्षेत्रं प्रकर्षयेत्। णिच्प्रयोगः स्वयंकृषिनिवृत्त्यर्थः। तथा चानापदि गौतमः "कृषिवाणिज्ये वा स्वयं कृते" इति। मनुरपि। [अ० ४।४]

"ऋतामृताभ्यां जीवेत्तु मृतेन प्रमृतेन वा" इति।

[मनु० अ० ४।५] "प्रमृतं कर्षणं स्मृतम्" इति। अक्षसूक्ते चेयमेव वृत्तिरुक्ता, "अक्षैर्मा दीव्य कृषिमित् कृषस्व" इति। प्रतिग्रहादयश्चापत्कल्पाः। त्रिषु नक्षत्रेषु कृषिं प्रारभेत। इदं च प्रारम्भदिवसे कुर्य्यादित्याह ॥ ३ ॥

**क्षेत्रस्यानुवातं, क्षेत्रस्य पतिना वयमिति प्रत्यृचं जुहुयाज्जपेद्वा ॥ ४ ॥**

क्षेत्रस्यानुवातं देशं गत्वा तत्रोपलेपनादि कृत्वा जुहुयात् जपेद्वेदं सूक्तं तत्रस्थ एव। पादग्रहणेऽपि सामर्थ्यात् सूक्तग्रहणम्। प्रत्यृचमिति व्याख्यातम् ॥ ४ ॥

गाः प्रतिष्ठमाना अनुमन्त्रयेत, मयोभूर्वातो अभि वा तूस्रा इति द्वाभ्याम् ॥ ५ ॥

भक्षणार्थमरण्यं प्रति गच्छन्तीर्गा अनुमन्त्रयेताहरहः आत्मीया अन्या वा, न नियमः ॥ ५ ॥

आयतीः, यासामूधश्चतुर्विलं मधोः पूर्णं घृतस्य च। ता नः सन्तु पयस्वतीर्बह्वीर्गोष्ठे घृताच्यः।

उप मैतु मयोभुव ऊर्ज्जं चौजश्च बिभ्रतीः। दुहाना अक्षितं पयो मयि गोष्ठे निविशध्वम्। यथा भवाम्युत्तमो या देवेषु तन्वामैरयन्तेति च सूक्तशेषम् ॥ ६ ॥

भक्षयित्वा ग्रामं प्रत्यागच्छन्तीर्गा अनुमन्त्रयेताहरहः यासामित्यृग्भ्यां, सूक्तशेषेण च ॥ ६ ॥

आगावोयमेके ॥ ७ ॥

आयतीनामनुमन्त्रणे "या गावो अग्मन्" इत्येतत्सूक्तमेके इच्छन्ति, पूर्वासां बाधः ॥ ७ ॥

गणानासामुपतिष्ठेतागुरुगवीनां, भूताः स्थ प्रशस्ताः शोभनाः प्रियाः प्रियो वो भूयासं शं मयि जानीध्वं शं मयि जानीध्वम् ॥ ८ ॥

आसाङ्गवां, अगुरुगवीनां सङ्घानुपतिष्ठेताहरहः भूताः स्थेति। गुरोर्गावस्तास्तु तिष्ठन्ति चेन्नोपतिष्ठेत। सर्वत्र स्थित्वै-वोपस्थेयं नोपविश्य। तथा चोक्तम्। "उपस्थानन्तदेव स्यात्

प्रणतिस्थानसंयुतम्" इति। अस्मयि सकृदेव वक्तव्यम्। अध्याय-परिसमाप्तिलक्षणार्थं हि द्विर्वचनम्॥ ८॥

इति द्वितीये दशमी कण्डिका॥

इत्याश्वलायनगृह्यसूत्रविवरणे नारायणीयायां वृत्तौ द्वितीयोऽध्यायः।

## तृतीयोऽध्यायः।

अथ प्रथमा कण्डिका॥

**अथातः पञ्चयज्ञाः॥ १॥**

उक्तोऽर्थः। अतः शब्दो हेत्वर्थः। यस्मादेतैर्महती निश्रेयसस्यावाप्तिस्तस्मात् पञ्चयज्ञा नामयज्ञा वक्ष्यन्त इत्यर्थः। इमं त इत्याह॥ १॥

**देवयज्ञो भूतयज्ञः पितृयज्ञो ब्रह्मयज्ञो मनुष्ययज्ञ इति॥ २॥**

तेषां स्वरूपमाह॥ २॥

**तद्यदग्नौ जुहोति स देवयज्ञो यद्बलिङ्करोति स भूतयज्ञो यत् पितृभ्यो ददाति स पितृयज्ञो यत् स्वाध्यायमधीयते स ब्रह्मयज्ञो यन्मनुष्येभ्यो ददाति स मनुष्ययज्ञ इति॥ ३॥**

वैश्वदेवे त्रयो यज्ञाः उक्ताः, तत्र यदग्नौ जुहोति दशाहुतीः स देवयज्ञः। यद्बलिङ्करोति "अथ बलिहरणम्" [गृ॰ सू॰ १, २,३] इति स भूतयज्ञः। यत् पितृभ्यो ददाति "स्वधा पितृभ्यः" [गृ॰ सू॰ १,२,११] इति स पितृयज्ञः। यत् स्वाध्या-

यमधीते "अथ स्वाध्यायविधिः" [गृ० सू० ३,२,१] इत्यनेन विधानेन स ब्रह्मयज्ञः। यत् मनुष्येभ्यो ददाति "ततोऽतिथीन् भोजयेत्" इति स्मृतिविधानेन स मनुष्ययज्ञः। अपूर्वाणां विधाने सति तद्यदग्नौ जुहोतीति सिद्धवदुपदेशो नोपपद्येत, अग्नौ जुहुयादित्येवावक्ष्यत्। अथ शास्त्रान्तरसिद्धानामनुवादः, तर्ह्यथ स्वाधायविधिरिति ब्रह्मयज्ञविधानमपार्थकं स्यात्, तस्यापि तत्र सिद्धत्वात्। अथ इष्टतन्त्रपरिग्रहार्थो ब्रह्मयज्ञस्योपदेशो न तद्युक्तं, तन्त्रभेदस्यासिद्धत्वात्। पञ्चयज्ञानां हि तैत्तिरीयारण्यकं मूलम्। "पञ्च वा एते महायज्ञाः" इत्यादि। तन्मूलत्वे च सति कथन्तन्त्रभेदसम्भवः। तस्माद्वैश्वदेवादय एव पञ्चयज्ञा इति सिद्धम्। मनुनाप्येवमेवोक्तं पितृयज्ञवर्जम्। पितृयज्ञं त्वन्यथोक्तवान्।

"एकमप्याशयेद्विप्रं पित्रर्थं पाञ्चयज्ञिके।
न चैवात्राशयेत् कञ्चिद्वैश्वदेवं प्रति द्विजम्।
कुर्य्यादहरहः श्राद्धमन्नाद्येनोदकेन वा।
पयोमूलफलैर्वापि पितृभ्यः प्रीतिमावहन्" [मनु० ३,८३। ८२] इति॥ ३॥

## तानेतान्यज्ञानहरहः कुर्वीत॥ ४॥

अस्येदं प्रयोजनम्। भोजनार्थात् पाकात् प्रवृत्तिर्वैश्वदेवस्येत्युक्तम्। यस्याग्नौ न क्रियते न तद्भोक्तव्यमिति निषेधात्, अत एव चान्नसंस्कारार्थं, तत्र यदा परान्नं भुङ्क्ते उपवसति वा तदा संस्कार्य्यस्य पाकस्याभावात् संस्कारस्य कर्मणोऽप्यभावः स्यात्, तन्निवृत्त्यर्थमिदम्। तेन पञ्चयज्ञार्थं सर्वथा पक्तव्यमेवेति सिद्धम्। अनेनाभ्यु पायेन वैश्वदेवमपूर्वार्थमपीति साधितं भवति। अपि च सर्वथा पाकासम्भवे पुष्पैः फलैरद्भिर्वा कुर्य्या-

दित्येवमर्थञ्च। उक्तञ्च "आपन्नमपि दातव्यं आकाष्ठमपि जुहु-यात् आऋचमपि ब्रह्मयज्ञं कुर्य्यात्" इति।

"न चेदुत्पद्यतेऽन्नं तु अद्भिरेनान् समापयेत्" इति च। अकरणे प्रायश्चित्तार्थं च उक्तञ्च बौधायनेन।

"एतेभ्यः पञ्चयज्ञेभ्यो यद्येकोऽपि विहीयते।
मनस्वत्याहुतिस्तत्र प्रायश्चित्तं विधीयते॥
द्व्यहं वापि त्र्यहं वापि प्रमादादकृतेषु तु।
तिस्रस्तन्तुमतीर्हुत्वा चतस्रो वारुणीर्जपेत्॥
दशाहं द्वादशाहं वा विनिवृत्तेषु सर्वतः।
चतस्रो वारुणीर्हुत्वा कार्य्यस्तन्तुमतश्चरुः"॥ इति।

केचिदाशौचदिवसेष्वपि वैश्वदेवं कार्य्यमित्येवमर्थमिति व्याचख्युः। तदयुक्तं, "पञ्चयज्ञविधानन्तु न कुर्य्यान्मृतजन्मनोः" इति निषेधात्॥ ४॥

इति तृतीये प्रथमा कण्डिका॥

---

अथ द्वितीया कण्डिका॥

## अथ स्वाध्यायविधिः॥ १॥

उक्तोऽर्थः। विधिग्रहणं विधिरेव वक्ष्यते न क्रम इत्येवमर्थम्। तेन वैश्वदेवस्य पुरस्तादुपरिष्टाद्वाऽध्येतव्यं न क्रमनियम इति सिद्धम्॥ १॥

**प्राग्वोदग्वा ग्रामान्निष्क्रम्याप आप्लुत्य शुचौ देशे यज्ञोपवीत्याचम्याक्लिन्नवासा दर्भाणां महदुपस्तीर्य्य प्राक्कूलानान्तेषु प्राङ्मुख उपविश्योपस्थं**

कृत्वा दक्षिणोत्तरौ पाणी सन्धाय पवित्रवन्तौ विज्ञायते, अपां वा एष ओषधीनां रसो यद्दर्भाः सरसमेव तद्ब्रह्म करोति द्यावापृथिव्योः सन्धि-मीक्षमाणः संमील्य वा यथा वा युक्तमात्मानं मन्येत तथा युक्तोऽधीयीत स्वाध्यायम् ॥ २ ॥

वाशब्दद्वयमन्यस्यां वाऽनिन्दितायान्दिशि कार्य्यमित्येव-मर्थं, वहिरसम्भवे ग्रामेऽध्येतव्यमित्येवमर्थं च। तथाच श्रुतिः। "ग्रामे मनसा स्वाध्यायमधीयीत्" इति। आप्लुत्येति स्नात्वे-त्यर्थः। वा इति वचनं अपो वगाह्य स्नायादित्येवमर्थम्। शुचौ देशे इति वचनं शुचौ देशे यत्र क्वाप्यधीयीत न तीर-नियम इत्येवमर्थम्। यज्ञोपवीतिग्रहणं नियमेनात्र यज्ञोप-वीती स्यादित्येवमर्थम्। तेन दहनकर्मणि प्राचीनावीतित्वं सिद्धम्। आचम्येतिवचनङ्कर्माङ्गाचमनविधानार्थम्। अक्लिन्न-वासा इति अनार्द्रवासा भवेदित्यर्थः। ततः प्राक्कूलानां दर्भाणां महदुपस्तीर्य्य तेषु प्राङ्मुख उपविश्योपस्थं कृत्वा दक्षिणोत्तरौ पाणी पवित्रवन्तौ सन्धायेति। महदिति बह्वित्यर्थः। प्राक्कू-लानां प्रागग्राणां इत्यर्थः। प्राङ्मुख इति वचनान्नियमेनात्र प्राङ्मुखः स्यादित्येवमर्थं, तेनान्यत्र क्वचिदुदङ्मुखतापि सिद्धा। दक्षिणोत्तरेणोपस्थं कुर्य्यात्, अपैतृकत्वात्। दक्षिण उत्तरो ययोः पाण्योस्तौ दक्षिणोत्तरौ पाणी। पवित्रे व्याख्याते। सव्यं पाणिं प्रागङ्गुलिमुत्तानं विधाय तस्मिन् प्रागग्रे पवित्रे निधाय दक्षिणं पाणिं न्यञ्चं प्रागङ्गुलिं तेन सन्दध्यादित्यर्थः। विज्ञायते श्रूयत इत्यर्थः। श्रुत्याकर्षः सर्वमिदं गृह्यशास्त्रं श्रुति-मूलमिति दर्शयितुम्। द्यावापृथिव्योः सन्धिमीक्षमाण इति

नोर्द्धमधस्तिर्य्यग्वेक्षेतेत्यर्थः। सम्मील्य वाऽक्षिणी। अन्येन वा येन प्रकारेणात्मानं समाहितमनसं मन्येत तथा युक्तोऽधीयीत, न सन्धीक्षणसम्मीलनर्नानियमः। स्वाध्यायवचनं सावित्र्या अपि स्वाध्यायधर्मसिद्ध्यर्थम्। तेन "सावित्रीमन्वाह" [गृ० सू० ३, २, ४] इति सावित्र्या अनुवचने सत्यपि सामिधेनीधर्म ऐकश्रुत्यं ऋगन्ते च प्रणवो न भवतीति सिद्धम् ॥ २ ॥

## ॐपूर्वा व्याहृतीः ॥ ३ ॥

प्रणवमादौ सकृदुक्त्वा ततस्तिस्रो व्याहृतीः समस्ता ब्रूयात्। प्रतिव्याहृति प्रणवशङ्का नैव कार्य्या, सकृत्कृतेनैव प्रणवेन ॐपूर्वत्वसिद्धेः। यथा "अध्वर्य्युमुखाः" इत्यत्र एकेनैवाध्वर्य्युणा सर्वेऽध्वर्य्युमुखा भवन्ति तद्वदत्रापि, पृथक् कल्पनायां प्रमाणाभावाच्च। ननु चतसृणां सूत्रे व्याहृतिसंज्ञा कृता। सत्यं कृता, क्वचित्तु सा न सर्वत्र। तेनात्र तिसृणामिति सिद्धम्। "भूर्भुवः स्वरित्येता वाव व्याहृतयः" इति श्रुतिः। अपि च तैत्तिरीयश्रुतिरेषां मूलमित्युक्तम्। तत्र च एवं श्रूयते। "ॐमिति प्रतिपद्य भूर्भुवः स्वरित्याह। सावित्रीं गायत्रीं त्रिरन्वाह। पच्छोऽर्द्धर्चशोऽनवानम्। स्वाध्यायमधीयीत। नमो ब्रह्मण इति परिधानीयां त्रिरन्वाह" इति। तस्माद्यदुक्तं तत्सम्यक् ॥ ३ ॥

## सावित्रीमन्वाह पच्छोऽर्द्धर्चशः सर्वामिति तृतीयम् ॥ ४ ॥

सर्वामिति अनवानमित्यर्थः। तृतीयवचनमुपकरणेऽपि पच्छोऽर्धर्चशोऽनवानमित्येवं त्रिर्ब्रूयादित्येवमर्थम् ॥ ४ ॥

इति तृतीये द्वितीया कण्डिका ॥

अथ तृतीये कण्डिका ॥

**अथ स्वाध्यायमधीयीत ऋचो यजूंषि सामान्यथर्वाङ्गिरसो ब्राह्मणानि कल्पान् गाथा नाराशंसीरितिहासपुराणानीति ॥ १ ॥**

अथशब्दः पूर्वेण सम्बन्धार्थः। तेन प्रणवादित्रयं स्वाध्यायस्याङ्गमिति सिद्धम्। स्वाध्यायवचनं ऋगादिरेव स्वाध्यायो न प्रणवादित्रयमित्येवमर्थम्। तेन ऋचमपि ब्रह्मयज्ञं कुर्य्यादित्यस्मिन् पक्षे सावित्रीपर्य्यन्तमुक्त्वा ऋचमधीयीत, ततो नम इत्येतया परिदध्यात्। तेन प्रणवादित्रयस्य परिधानीयायाश्च नित्यत्वं साधितं भवति। अधीयीतेतिवचनमन्वाहाधिकारनिवृत्त्यर्थम्, तेनानुप्रवचनधर्मो न भवति। सूत्राण्येव कल्पा इत्युच्यन्ते। नन्वनित्यानां सूत्राणां नित्यश्रुत्या उपदेशो न घटते। नन्वनित्यस्य पशोः पशुना यजेतेति विधिर्न घटते। अथ तत्राकृतेर्नित्यत्वादुपपद्यते तदत्राप्यविशिष्टम्। सर्वकल्पेषु कल्पत्वं नामानुवृत्तन्नित्यमस्ति। गाथा नाम ऋग्विशेषाः, इन्द्रगाथादयः। "यदिन्द्रादो दाशराज्ञे" इति इन्द्रगाथाः पञ्चर्चः। नाराशंस्यश्च ऋच एव "इदं जना उपश्रुतम्" इत्यादयः। ऋक्त्वादेव सिद्धे पुनर्वचनं फलविशेषसिद्ध्यर्थम्। इतिहासं महाभारतमाहुः। यत्र सृष्टिस्थित्युत्पत्तिप्रलयाः कथ्यन्ते तत्पुराणम्। अनित्यचोद्यं पूर्ववत्। इह हि द्रव्योत्सर्गनिमित्तं फलं दृष्टम्। अतः स्वाध्यायमात्रेणापि फलमस्तीति श्रुतिमुपन्यस्यति ॥ १ ॥

**यदृचोऽधीते पयआहुतिभिरेव तद्देवतास्तर्पयति, यद्यजूंषि घृताहुतिभिः यत्सामानि म-**

ध्वाहुतिभिः, यदथर्वाङ्गिरसः सोमाहुतिभिः, यद् ब्राह्मणानि कल्पान् गाथा नाराशंसीरितिहासपुराणानीत्यमृताहुतिभिः ॥ २ ॥

ब्रह्मयज्ञाध्ययनेन देवतास्तृप्यन्तीत्युक्तं, पितरश्च तृप्यन्तीत्याह ॥ २ ॥

यदृचोऽधीते पयसः कुल्या अस्य पितॄन् स्वधा उपचरन्ति, यद्यजूंषि घृतस्य कुल्याः, यत्सामानि मध्वः कुल्याः, यदथर्वाङ्गिरसः सोमस्य कुल्याः, यद्ब्राह्मणानि कल्पान् गाथा नाराशंसीरितिहासपुराणानीत्यमृतस्य कुल्याः ॥३॥

स्वधेति पितॄणामन्नमुच्यते। पयसो नद्यः स्वधाभूताः पितॄनुपतिष्ठन्तीत्यर्थः। एवमुत्तरत्रापि नेयम् ॥ ३ ॥

स यावन्मन्येत तावदधीत्यैतया परिदधाति, नमो ब्रह्मणे नमोऽस्त्वग्नये नमः पृथिव्यै नमः ओषधीभ्यः। नमो वाचे नमो वाचस्पतये नमो विष्णवे महते करोमीति ॥ ४ ॥

ऋगादिदशकमध्येतव्यमित्युक्तं, तत्र नियमेन दशानामध्ययने प्राप्ते इदमुच्यते। स यावत् कालमेकाग्रमनसा आत्मानं मन्येतैतावत्कालमेवाधीयीत न दशाप्यध्येतव्या इति नियमः। सर्वथा समाहितमनसैवाध्येतव्यम्, नैयत्यानियम इत्यर्थः। एतयेतिवचनं सदैतया परिदध्यादित्येवमर्थम्, तेनास्यापि

नित्यत्वं सिद्धम्। एषापि त्रिर्वाच्या, प्रथमायां दृष्टत्वाच्छ्रुतिदर्शनाच्च ॥ ४ ॥

इति तृतीये तृतीया कण्डिका ॥

अथ चतुर्थी कण्डिका ॥

देवतास्तर्पयति, प्रजापतिर्ब्रह्मा वेदा देवा ऋषयः सर्वाणि छन्दांस्योङ्कारो वषट्कारो व्याहृतयः सावित्री यज्ञा द्यावापृथिवी अन्तरिक्षमहोरात्राणि संख्याः सिद्धाः समुद्रा नद्यो गिरयः क्षेत्रौषधिवनस्पतिगन्धर्वाप्सरसो नागा वयांसि गावः साध्या विप्रा यक्षा रक्षांसि भूतान्येवमन्तानि ॥ १ ॥

परिधानानन्तरं एता देवतास्तर्पयत्युदकेन, तर्पणे तस्य प्रसिद्धत्वात्। प्रजापतिरित्यारभ्य एकान्नत्रिंशद्दाक्येषु तृप्यतु तृप्येतां तृप्यन्त्विति यथार्थमुक्त्वा तर्पयेत्। एवमन्तानीति पृथगन्त एव ॥ १ ॥

अथ ऋषयः शतर्चिनो माध्यमा गृत्समदो विश्वामित्रो वामदेवोऽत्रिर्भरद्वाजो वसिष्ठः प्रगाथाः पावमान्यः क्षुद्रसूक्ता महासूक्ता इति ॥२॥

अनन्तरं शतर्चिप्रभृतीन् द्वादश ऋषींस्तर्पयति। प्रत्यृषि वाक्यभेदः पूर्ववत्। ऋषिग्रहणं निवीतिप्राप्त्यर्थम्। "यज्ञोपवीतशौचे च" [श्रा० श्रौ० १, १, १०] इत्यनेन निवर्त्तितत्वात्। तीर्थविशेषस्तु स्मृतित एव सिद्धः ॥ २ ॥

प्राचीनावीति ॥ ३ ॥

प्राचीनावीती भूत्वा वक्ष्यमाणांस्तर्पयति। अयमपि प्रतिप्रसव एव ॥ ३ ॥

सुमन्तुजैमिनिवैशम्पायनपैलसूत्रभाष्यभारतमहाभारतधर्माचार्य्या जानन्तिबाहविगार्ग्यगौतमशाकल्यबाभ्रव्यमाण्डव्यमाण्डकेया गार्गी वाचक्नवी वडवा प्राचीथेयी सुलभा मैत्रेयी, कहोलं कौषीतकं पैङ्ग्यं महापैङ्ग्यं सुयज्ञं शाङ्खायनमैतरेयं महैतरेयं शाकलं बाष्कलं सुजातवक्त्रमौदवाहिं महौदवाहिं सौजामिं शौनकमाश्वलायनं ये चान्ये आचार्य्यास्ते सर्वे तृप्यन्त्विति ॥ ४ ॥

त्रयोविंशति वाक्यानि, तत्र कहोलादिषु अर्थात् तर्पयामिशब्दः कार्य्यः। सर्वत्र प्रतिवाक्यं तर्पणं कुर्य्यात्, एकमन्त्राणि कर्माणीति न्यायात् ॥ ४ ॥

प्रतिपुरुषं पितॄंस्तर्पयित्वा गृहानेत्य यद्ददाति सा दक्षिणा ॥ ५ ॥

पितरं पितामहं प्रपितामहं च तर्पयित्वा गृहानेत्य यद्ददाति अतिथिभोजनभिक्षादानादि सा ब्रह्मयज्ञस्य दक्षिणा भवति। यद्ददातीति सिद्धवदुपदेशान्नापूर्वं विधीयत इति गम्यते। अपूर्वविधौ तु गृहानेत्य दद्यादित्यवक्ष्यत्। सदक्षिणत्वं ब्रुवता सोमयागसाम्यं प्रदर्शितं प्रशंसार्थम्। क्रतुना तेना-

स्विष्टं" इत्यादि प्रशंसा श्रूयते। प्रतिपुरुषवचनं पृथक् पृथक् तर्पयेत् इत्येवमर्थम्। पूर्वोक्तोपवेशनासम्भवेऽपि एवं वा ब्रह्मयज्ञं कुर्य्यादिति श्रुतिमेवाह॥ ५॥

**अथापि ज्ञायते, स यदि तिष्ठन् व्रजन्नासीनः शयानो वा यं यं क्रतुमधीते तेन तेन हास्य क्रतुनेष्टम्भवतीति॥ ६॥**

"न शयानोऽधीयीत नाष्टम्यां" इत्यादिनिषेधो नित्यस्वाध्यायस्यैव न ब्रह्मयज्ञस्येति श्रुतिमेवाह॥ ६॥

**विज्ञायते, तस्य द्वावनध्यायौ यदात्माऽशुचिर्यद्देशः॥ ७॥**

तस्य ब्रह्मयज्ञस्य द्वावेवानध्यायौ यदात्माऽशुचिः सूतकेन मृतकेन वा मलादिना वा। यदा च देशोऽशुचि अमेध्यादिना नवो भयचैवेत्यर्थः। कालस्त्वस्य श्रुतौ श्रूयते। "मध्यन्दिने प्रबलमधीयीत य एवं विद्वान्महाराव उपस्युदिते च" इति॥ ७॥

इति तृतीये चतुर्थी कण्डिका॥

अथ पञ्चमी कण्डिका॥

**अथातोऽध्यायोपाकरणम्॥ १॥**

अध्ययनमध्यायस्तस्योपाकरणं प्रारम्भो येन कर्मणा तदध्यायोपाकरणम्। उक्तोऽर्थः। अतःशब्दो हेत्वर्थः। यस्माद् ब्रह्मयज्ञो नित्यः अतोऽध्यायोपाकरणं ब्रूम इति। तस्य कालमाह॥ १॥

**ओषधीनां प्रादुर्भावे श्रवणेन श्रावणस्य॥२॥**

ओषधीनां प्रादुर्भावे सति श्रावणमासस्य श्रवणेन कर्त्तव्यम्। ओषधीनां प्रादुर्भाव इतिवचनं यदा श्रावणे प्रादुर्भावो न स्यात् तदा भाद्रपदे श्रवणेन कर्त्तव्यमित्येवमर्थम्। दृष्ट्यपकर्षे कर्मापकर्षशङ्का नैवास्ति। यदा भाद्रपदादुत्कर्षो भवति तदापि कर्मोत्कर्षशङ्का नैव कार्य्या। वार्षिकमिति समाख्याबलात् वर्षासु क्रियत इति वार्षिकम्। श्रावणभाद्रपदमासौ हि न वर्षाऋतुः। श्रावणे प्रादुर्भावाभावे कर्माकरणशङ्काप्यन्येनैव निरस्ता। श्रवणेनेति श्रवणेन युक्ते काले इत्यर्थः। नक्षत्रेण युक्तः कालः [ पा० ४,२,३ ] इत्यनेनाण्। "लुबविशेषे" [ पा० ४, २, ४ ] इति तस्य लुप्। "नक्षत्रे च लुपि" [पा० २, ३, ४५] इति सप्तम्यर्थे तृतीया। नक्षत्रशब्देषु सर्वत्रैवं योज्यम् ॥ २ ॥

## पञ्चम्यां हस्तेन वा ॥ ३ ॥

अत्रापि श्रावणस्येति सम्बध्यते, मध्यगतस्य विशेषाभावात्, प्रयोजनवत्त्वाच्च। श्रावणमासस्य पञ्चमी यदा हस्तेन युज्यते तदा वेत्यर्थः। इति कालत्रयमुक्तम् ॥ ३ ॥

## आज्यभागौ हुत्वाऽऽज्याहुतीर्जुहुयात् सावित्र्यै ब्रह्मणे श्रद्धायै मेधायै प्रज्ञायै धारणायै सदसस्पतयेऽनुमतये छन्दोभ्य ऋषिभ्यश्चेति ॥४॥

आज्यभागवचनं नित्यार्थम्। द्रव्यानादेशादेवाज्ये सिद्धे आज्याहुतिवचनं उत्सर्जनेऽप्येतान् वाज्येनैव जुहुयात् नान्येनेत्येवमर्थम्, परिस्तरणविकल्पस्यासम्भवात्॥ ४ ॥

## अथ दधिसक्तून् जुहोति ॥ ५ ॥

दधिमिश्रान् सक्तूनित्यर्थः। मन्त्रानाह ॥ ५ ॥

अग्निमीडे पुरोहितमित्येका ॥ ६ ॥

एकाग्रहणं कुषुम्भकादिवत् तृचनिवृत्त्यर्थम् ॥ ६ ॥

कुषुम्भकस्तदब्रवीत्, आवदंस्त्वं शकुने भद्रमावद, गृणाना जमदग्निना, धामन्ते विश्वम्भुवनमधिश्रितं, गन्ता नो यज्ञं यज्ञियाः, सुशमियो न खो अरणः प्रचच्छ, विचच्छाग्ने याहि मरुत्सखायते, राजञ्छतं हविरिति तृचाः ॥७॥

एते नव तृचाः ॥ ७ ॥

समानीव आकूतिरित्येका ॥ ८ ॥

एकाग्रहणं तृचानन्तरमियमेवैका न वक्ष्यमाणेत्येवमर्थम् ॥ ८ ॥

तच्छंयोरावृणीमह इत्येका ॥ ९ ॥

अत्र चैकाग्रहणं तृचानन्तरमियमेवैका न पूर्वेत्येवमर्थम् । एवमनयोर्विकल्पः । शाकलसमाम्नायस्य बाष्कलसमाम्नायस्य चेदमेव सूत्रं गृह्यञ्चेत्यध्येतृप्रसिद्धम् । तत्र शाकलानां "समानीव आकूतिः" इत्येषा भवति, संहितान्त्यत्वात् । बाष्कलानान्तु "तच्छंयोरावृणीमहे" इत्येषा भवति । संहितान्त्यत्वादित्येवं विनिवेशो युक्तः ॥ ९ ॥

अध्येष्यमाणोऽध्याप्यैरन्वारब्ध एताभ्यो देवताभ्यो हुत्वा सौविष्टकृतं हुत्वा दधिसक्तून् प्राश्य ततो, मार्जनम् ॥ १० ॥

अध्यापयितव्यैरित्यर्थः । अध्याप्यैरन्वारब्ध इत्येतावतैव सिद्धे अध्येष्यमाण इतिवचनमध्याप्याभावेऽप्यध्येष्यमाणः स्वय-

मेव कुर्य्यादित्येवमर्थम्। "वर्षासु छन्दांस्युपाकृत्याधीयीरन्" इति श्रुतिः। पञ्चम्यां हस्तेन वाऽध्येष्यमाणोऽध्याप्यैरन्वारब्ध आज्यभागौ हुत्वाऽऽज्याहुतीर्जुहुयादित्येवं वक्तव्ये, एताभ्यो देवताभ्यो हुत्वेति वचनं सावित्र्यादिनवानामग्निमीड आदि-विंशतीनाञ्च देवताग्रहणेन ग्रहणार्थम्। क्व। एताभ्यो देवताभ्योऽन्नेन हुत्वा एता एव देवता इत्यत्र च। स्विष्टकृद्वचनं व्याख्यातं प्राक्। दधिसक्तुवचनं आज्यनिवृत्त्यर्थम्। परिस्तरणैरञ्जलिमन्तर्धायाप आसिचयते तन्मार्जनम्। प्राशनादि वेदारम्भणान्तं शिष्याणामपि कार्य्यम्॥ १०॥

**अपरेणाग्निं प्राक्कूलेषु दर्भेषूपविश्योदपात्रे दर्भान् कृत्वा ब्रह्माञ्जलिकृतो जपेत्॥११॥**

पश्चादग्नेः प्रागग्रेषु दर्भेषु उपविशन्ति। ततः शरावादौ उदकमासिच्य तत्र दर्भान् निदध्यात्। ततो ब्रह्माञ्जलिकृतो जपेत् स्वयं शिष्यैः सह सन्ति चेत्। जपतिचोदनायां गृह्यकर्मणि अनित्यमुपांशुत्वमिति ज्ञापयिष्यामः। तस्मादुच्चैरेव जपेत्। अध्यापनविरोधाच्च॥ ११॥

**ॐपूर्वा व्याहृतीः सावित्रीं च त्रिरभ्यस्य वेदादिमारभेत्॥ १२॥**

पूर्वमोङ्कारम्। ततस्तिस्रो व्याहृतीः समस्ताः। ततः सावित्रीम्। एवमेतत्त्रितयन्त्रिरभ्यस्य वेदादिमग्निमीड इत्यारभ्य सूक्तमनुवाकं वारभेत। चशब्दः श्रवणव्याहृतीनामप्यभ्यासार्थः। अथ सर्वप्रायश्चित्तादि समापयेत्॥ १२॥

**तथोत्सर्गे॥ १३॥**

अत्र एतेनित्यभावात् न कृत्स्नकर्मातिदेशः। वेदारम्भ-समात्रमतिदिश्यते। एताभ्यो देवताभ्योऽन्नेन हुत्वेति च प्रधानहोमः। तेन प्राशनमार्जने उत्सर्जने न भवत इति सिद्धम् ॥ १३ ॥

## षण्मासानधीयीत ॥ १४ ॥

इदं वचनमुपाकृत्य नियमेन षण्मासानधीयीत नोपरमेदित्येवमर्थम् ॥ १४ ॥

## समावृत्तो ब्रह्मचारिकल्पेन ॥ १५ ॥

ब्रह्मचारिधर्मैरित्यर्थः। स्वाध्यायकाले ये विहिता धर्मा मधुमांसस्त्रीगमनखट्वादिवाशयनादिवर्जनादयः तैर्युक्तोऽधीयीत। समावृत्तस्य मेखलादयस्तु न भवन्ति, अस्वाध्यायधर्मत्वात् ॥ १५ ॥

## यथान्यायमितरे ॥ १६ ॥

ब्रह्मचारिण इत्यर्थः। अस्मिन्नध्ययने ब्रह्मचारिणामपि प्रवृत्त्यर्थमिदम्। इतरथा समावृत्तानामेवेति शङ्का स्यात् ॥ १६ ॥

## जायोपेयेत्येके ॥ १७ ॥

समावृत्तो जायाङ्गच्छेदित्येके आहुः। ऋताविव गच्छेन्नानृताविवत्याह ॥ १७ ॥

## प्राजापत्यं तत् ॥ १८ ॥

तद्गमनं प्रजापतित्वसिद्ध्यर्थं कार्य्यम्। प्रजोत्पत्त्यर्थमित्यर्थः। तदर्थङ्कार्य्यं नानृतावित्यर्थः। ऋतुगमनं सर्वथा कार्य्यमिति तेषामभिप्रायः। अगमने दोषश्रवणात्।

"ऋतुस्नातान्तु यो भार्यां सन्निधौ नोपगच्छति।

घोरायां भ्रूणहत्यायां युज्यते नात्र संशयः ॥" [मनु० टी० ३,४५,।] इति ॥ १८ ॥

**वार्षिकमित्येतदाचक्षते ॥ १९ ॥**

एतदुपाकरणमित्यर्थः। आचक्षत इति ब्रुवन् वैदिकीयं संज्ञा न पारिभाषिकीति दर्शयति। अन्वर्थसंज्ञेयं प्राक् ॥१९॥

**मध्यमाष्टकायामेताभ्यो देवताभ्योऽन्नेन हुत्वाऽपोऽभ्यवयन्ति ॥ २० ॥**

मध्यमाष्टकाग्रहणं षण्मासान्तोपलक्षणार्थम्। तेन तस्याः समीपे माघ्यां पौर्णमास्यामित्यर्थः। शाखान्तरे चैवं दृश्यते। "एताभ्यो देवताभ्यो हुत्वा सावित्र्यादिभ्य आज्यम्" इत्युक्तम्। अग्निमीड़ इत्यादिभ्योऽन्नेन हुत्वा स्थालीपाकग्रहणमकृत्वाऽन्नेनेति यत्नेन ब्रुवन् गृहसिद्धमत्र ग्राह्यमिति दर्शयति, ततः स्विष्टकृत्, ततो वेदारम्भणम्। ततो होमशेषं समाप्यापो वगाहन्त इत्यर्थः ॥ २० ॥

**एता एव तद्देवतास्तर्पयन्ति ॥ २१ ॥**

स्नात्वा सावित्र्याद्या नव अग्निमीड़ इत्याद्याश्च विंशतिं तर्पयन्तीत्यर्थः। ऋग्देवता आदिश्य तर्पयेयुः। द्वितीयान्तं कृत्वा तर्पयामीत्येकान्नत्रिंशद्वाक्यानि कृत्वा तावत्कृत्वस्तर्पयेयुः ॥ २१ ॥

**आचार्य्यान् ऋषीन् पितृंश्च ॥ २२ ॥**

यच्च ब्रह्मयज्ञाङ्गं तर्पणमुक्तं तदेतदङ्गत्वेनेदानीमपि कार्य्यमित्यर्थः। चशब्दो देवतातर्पणसमुच्चयार्थः। तेन प्रजापत्याद्या अपि तर्प्याः। देवतास्तर्पयन्तीत्यत्र देवताग्रहणमत्रापि समुच्चयार्थम्। क्रमश्च तन्त्रोक्त एव ॥ २२ ॥

एतदुत्सर्जनम् ॥ २३ ॥

अस्येयं संज्ञा। ततः षण्मासान् षडङ्गान्यधीयीत। षण्मासानधीयीतेत्यारभ्य एवमन्ता धर्मा ग्रहणाध्ययन एवेत्याहुरेके। अन्ये त्वविशेषेणेत्याहुः ॥ २३ ॥

इति तृतीये पञ्चमो कण्डिका ॥

अथ षष्ठी कण्डिका ॥

अथ काम्यानां स्थाने काम्याः ॥ १ ॥

त्रेतायां या इष्टयः पशवश्च "आयुष्कामेष्ट्याम्" इत्याद्याः "वायव्यं श्वेतमालभेत भूतिकामः" इत्याद्याश्च तेषां स्थाने काम्याः पाकयज्ञाः कार्य्या इत्यर्थः। काम्यसोमस्थाने सोमो न कार्य्यः। सोमतन्त्रस्य गृह्येऽविधानात्। तत्र द्रव्यमाह ॥ १ ॥

चरवः ॥ २ ॥

त्रेतायां ये पुरोडाशाः तेषां स्थाने चरवः कार्य्याः। पशुस्थाने तु पशुरेव कार्य्यः। समानजातीयस्यैव हि बाधो भवति, ओषधिसाम्यात्, न पशोः। उक्तञ्च बौधायनेन। "येऽमुत्र पुरोडाशास्त इह चरवः" इति। नामधेयेन होम इत्युक्तम् ॥ २ ॥

तानेव कामानाप्नोति ॥ ३ ॥

अन्ये पाकयज्ञा आहिताग्नेरनाहिताग्नेश्च साधारणा इत्युक्तम्। काम्यास्त्वनाहिताग्नेरेव भवन्तीत्येवमर्थमिदं वचनम्। नैमित्तिकान्याह ॥ ३ ॥

अथ व्याधितस्यातुरस्य यक्ष्मगृहीतस्य वा षडाहुतिश्चरुः ॥ ४ ॥

व्याधितो ज्वरादिगृहीतः। आतुरस्तल्पगः। यक्ष्मगृहीतः क्षयव्याधिगृहीतः। त्रिषु निमित्तेषु षडाहुतिर्नाम चरुः कार्यः। षडाहुतिरिति कर्मनाम। चरुग्रहणमाज्यनिवृत्त्यर्थम् ॥ ४ ॥

मुञ्चामि त्वा हविषा जीवनायकमित्येतेन ॥ ५ ॥

प्रत्यृचं पञ्चाहुतीर्हुत्वा स्विष्टकृतं षष्ठं कुर्यात्। अत्र हीनपादग्रहणमेव कथं न कृतं, षष्ठं एतेनेति च न वक्तव्यं भवति। उच्यते। एतेनेत्यन्यसूक्तनिवृत्त्यर्थम्। क्व। शौनकेनोक्तं "रक्षोघ्नः षडाहुतिः" इति, तत्राप्यनेनैव सूक्तेन होतव्यमित्येवमर्थम्। ऐतरेयिभिस्तु "ब्रह्मणाग्निः" इत्यनेन षडाहुतिराम्नातः। अस्य सूक्तं रक्षोहलिङ्गम्। तस्मात् माप्नुयात् तन्निवृत्त्यर्थमेतेनेतिवचनम्। प्रत्यृचमेव पञ्च हुत्वा स्विष्टकृतं षष्ठं कुर्यात्। सूक्तमेवावर्त्य षडाहुतयो माभूवन्नित्येवमर्थं पादग्रहणम्। ५ ॥

स्वप्नममनोज्ञं दृष्ट्वा, अद्या नो देव सवितरिति द्वाभ्यां, यच्च गोषु दुःस्वप्न्यमिति पञ्चभिरादित्यमुपतिष्ठेत ॥ ६ ॥

अशुभं स्वप्नं दृष्ट्वा द्वाभ्यां पञ्चभिश्चोपतिष्ठेत ॥ ६ ॥

यो मे राजन् यूज्यो वा सखा वेति वा ॥७॥

अनयैव वा पूर्वाभिर्वा सप्तभिरिति विकल्पः ॥ ७ ॥

क्षुत्वा जृम्भित्वाऽमनोज्ञं दृष्ट्वा पापकं गन्धमाघ्रायाक्षिस्पन्दने कर्णध्वनने च, सुचक्षा अहमक्षीभ्यां भूयासं सुवर्चा मुखेन सुश्रुत्कर्णाभ्यां मयि दक्षक्रतू इति जपेत् ॥ ८ ॥

अमनोज्ञं दृष्ट्वा अप्रियं प्रत्यक्षेण दृष्ट्वेत्यर्थः। षट्सु निमित्तेष्वेतां दपेत् ॥ ८ ॥

अगमनीयां गत्वाऽयाज्यं याजयित्वाऽभोज्यं भुक्त्वाऽप्रतिग्राह्यं प्रतिगृह्य चैत्यं यूपं चोपहत्य, पुनर्मामैत्विन्द्रियं पुनरायुः पुनर्भगः। पुनर्द्रविणमैतु मां पुनर्ब्राह्मणमैतु मां स्वाहा। इमे ये धिष्ण्यासो अग्नयो यथास्थानमिह कल्पताम्। वैश्वानरो वावृधानोऽन्तर्यच्छतु मे मनो हृद्यन्तरमृतस्य केतुः स्वाहेत्याज्याहुतीर्जुहुयात् ॥ ९ ॥

अगमनीयाङ्गत्वेति स्वभार्यां रजस्वलां गत्वा, षष्ठ्यादिषु वा प्रतिषिद्धरात्रिषु गत्वा। अयाज्यः न्यस्तमार्त्विज्यमिति निषिद्धः। अभोज्यं शुनादि गणिकान्नादि च। अप्रतिग्राह्यं शस्त्रविषमित्यादि, अप्रतिग्राह्यपुरुषद्रव्यं वा। अग्निचयनस्थं यूपं स्पृष्ट्वा च। तेषु पञ्चसु निमित्तेषु द्वाभ्यां एताभ्यां जुहुयात्। आज्याहुतिवचनन्तन्त्रनिवृत्त्यर्थमिष्यते ॥ ९ ॥

समिधौ वा ॥ १० ॥

आदध्यादिति शेषः ॥ १० ॥

जपेद्वा ॥ ११ ॥

जपपक्षे स्वाहाकारं त्यजेत्, प्रदानाभावात् ॥ ११ ॥

इति तृतीये षष्ठी कण्डिका ॥

अथ सप्तमी कण्डिका ॥

अव्याधितश्चेत् स्वपन्तमादित्योऽभ्यस्तमियाद्वाग्यतोऽनुपविशन् रात्रिशेषम्भूत्वा, येन सूर्य्यज्योतिषा बाधसे तम इति पञ्चभिरादित्यमुपतिष्ठेत ॥ १ ॥

अव्याधितं स्वपन्तं सन्तं यद्यभ्यस्तमियाद्रविस्ततो वाग्यतोऽनुपविशंश्च रात्रिशेषं स्थित्वा तत उदिते पञ्चभिरुपतिष्ठेत ॥ १ ॥

अभ्युदियात् चेदं कर्म श्रान्तमनभिरूपेण कर्मणा वाग्यत इति समानमुत्तरापराभिश्चतसृभिरुपस्थानम् ॥ २ ॥

अव्याधितं स्वपन्तं सन्तं विहितकर्मणा अश्रान्तमकर्मश्रान्तमभ्युदियात् चेत्। विहितकर्मणा श्रान्ते तु न भवति प्रायश्चित्तम्। अनभिरूपेणाविहितेन कर्मणा नृत्यादिना कर्मणा श्रान्तमभ्युदियाच्चेत् वाग्यतोऽनुपविशंश्चाहःशेषं स्थित्वाऽपरेद्युरुदित आदित्ये "यस्य ते विश्व" इति चतसृभिरुपतिष्ठेत। अथ नित्यकर्मोच्यते ॥ २ ॥

यज्ञोपवीती नित्योदकः सन्ध्यामुपासीत वाग्यतः ॥ ३ ॥

यज्ञोपवीतीति व्याख्यातम्। नित्योदकः मूत्रपुरीषोदककर्म-

त्यर्थः । अतो मार्जनादि कार्य्यम् । सन्ध्यामुपासीत वाग्यतः । एतावत्सन्ध्याद्वये समानम् । प्रतिसन्ध्यमित्यमुपासीतेत्याह ॥३॥

सायमुत्तराभिमुखोऽन्वष्टमदेशं सावित्रीं जपेदर्धास्तमिते मण्डल आनक्षत्रदर्शनात् ॥४॥

सायङ्काले उत्तरां परान्दिशमभिमुखः वायव्याभिमुख इत्यर्थः । तत्रापि नाञ्जसाभिमुखः अपि त्वन्वष्टमदेशमभिमुखः, प्रतीच्यान्दिशि य उत्तरो भागः तदभिमुख इत्यर्थः । सावित्रीं जपेदितः कालादारभ्य आ इतः कालात् ॥ ४ ॥

एवं प्रातः ॥ ५ ॥

एवमेव प्रातःकाल उपासीत । तत्र विशेषमाह ॥ ५ ॥

प्राङ्मुखस्तिष्ठन्नामण्डलदर्शनात् ॥ ६ ॥

प्राङ्मुख इति वायव्याभिमुखनिवृत्त्यर्थम् । तिष्ठन्नित्युपवेशननिवृत्त्यर्थम् । अतो ज्ञायते अविशेषे उपवेशनं भवतीति । पूर्वावधिस्तु अर्धास्तमितेषु नक्षत्रेषु । कुतः, पूर्वस्माद्विपरीतत्वात् । उत्तरावधिस्तु अत्रैवोक्तः ॥ ६ ॥

कपोतश्चेदगारमुपहन्यादनुपतेद्वा, देवाः कपोत इति प्रत्यृचं जुहुयाज्जपेद्वा ॥७॥

कपोतो रक्तपादः शुक्लवर्णोऽरण्यवासी, स यद्यगारमुपहन्यात् निषीदेत्तस्मिन् पदङ्कुर्य्यादित्यर्थः । अगारसमीपं वा गच्छेत् ततोऽनेन जुहुयात्, जपेद्वेदं सूक्तम् । प्रत्यृचं व्याख्यातम् ॥ ७ ॥

वयमु त्वा पथस्पते इत्यर्थचर्य्यांश्चरिष्यन् ॥८॥

अर्थार्थं गच्छन्ननेन प्रत्यृचं जुहुयात्, जपेद्वेदम् । अत्र पादग्रहणेऽपि सामर्थ्यात् सूक्तग्रहणम् ॥ ८ ॥

सम्पूषन्विदुषा इति नष्टमधिजिगमिषन् मूढो वा ॥ ९ ॥

नष्टं वस्तु लब्धुमिच्छन् प्रज्ञाहीनो वा जुहुयात्, जपेद्वेदम् ॥ ९ ॥

सम्पूषन्नध्वने, इति महान्तमध्वानमेष्यन् प्रतिभयं वा ॥ १० ॥

महान्तमध्वानङ्गमिष्यन् अल्पमपि प्रतिभयं भयानकं चध्वानमेष्यन् अनेन जुहुयात्, जपेद्वेदम ॥ १० ॥

इति तृतीये सप्तमी कण्डिका ॥

---

अथ अष्टमी कण्डिका ॥

अथैतान्युपकल्पयीत समावर्त्त्यमाने मणिं कुण्डले वस्त्रयुगं छत्रमुपानद्युगं दण्डं स्रजमुन्मर्दनमनुलेपनमाञ्जनमुष्णीषमित्यात्मने चाचार्य्याय च ॥ १ ॥

उक्तोऽर्थः। उपकल्पयीतेतिशब्दोऽयं छान्दसः। समावर्त्तनं नाम संस्कारः, तेन संस्क्रियमाण इत्यर्थः। अर्थादेवोपकल्पने सिद्धे उपकल्पनवचनमत्रात्मने चाचार्य्याय च एतान्येकादश द्रव्याणि उपकल्पयेदिति विधानार्थम् ॥ १ ॥

यद्युभयोर्न विन्देताचार्य्यायैव ॥ २ ॥

यद्युभयोर्न लभेत तदाचार्य्यायैव केवलायोपकल्पयेत् ॥२॥

समिधं त्वाहरेदपराजितायान्दिशि यज्ञियस्य वृक्षस्य ॥ ३ ॥

यज्ञियस्य वृक्षस्य या अपराजिता दिक् ततो गृहीत्वा आहरेत्। यज्ञियस्येति वचनं होमार्थेयं समिदिति ज्ञापयितुम्। तेन तिष्ठन् समिधमादध्यादित्यत्र इमामादध्यादिति सिद्धम् ॥ ३ ॥

आर्द्रामन्नाद्यकामः पुष्टिकामस्तेजस्कामो वा, ब्रह्मवर्चसकाम उपवाताम् ॥ ४ ॥

शुष्कामित्यर्थः ॥ ४ ॥

उभयीमुभयकामः ॥ ५ ॥

आर्द्रशुष्कामित्यर्थः। एको भाग आर्द्रः। अपरो भागः शुष्कः ॥ ५ ॥

उपरि समिधं कृत्वा गामन्नञ्च ब्राह्मणेभ्यः प्रदाय गौदानिकं कर्म कुर्वीत ॥ ६ ॥

आहृतां समिधमुपरि निदध्यात्, न भूमौ। ततो ब्राह्मणेभ्यो गान्दक्षिणां दद्यात्, कर्माङ्गत्वेन भोजनञ्च देयम्। ततो गोदानोक्तं कर्मेहापि कुर्य्यात्। कर्मग्रहणं कर्मैव कुर्य्यात् नाप्लुत्य वाग्यत इत्यादिनियमाः कार्य्या इत्येवमर्थम्। इदं कर्म स्वयमेव करोति समावर्त्त्यमाने इत्यधिकारात्, ऊहदर्शनाच्च ॥ ६ ॥

आत्मनि मन्त्रान् संनमयेत् ॥ ७ ॥

मन्त्रान् आत्मवाचकान् कुर्य्यादित्यर्थः। ऊह्यानि ब्रूमः। "ओषधे त्रायस्व माम्। स्वधिते मा माहिंसीः। वपतेदं ममायुष्मान्। यथासन्ते, मम आयुष इत्युभयत्र। शिरो मुखम्माम आयुः प्रमोषीः" इयि ॥ ७ ॥

एकक्रीतकेन ॥ ८ ॥

उन्मर्दनं कुर्वीतेति शेषः। करञ्जबीजस्य यत्रैकं बीजन्त-रेकक्रीतकं, तत् पेषयित्वा तेनोन्मर्दनं कारयेत् ॥ ८ ॥

**शीतोष्णाभिरद्भिः स्नात्वा, युवं वस्त्राणि पीवसा वसाथे इत्यहते वाससी आच्छाद्य, अश्म-नस्तेजोऽसि चक्षुर्मे पाहीति चक्षुषी आञ्जयीत ॥ ९ ॥**

प्रतिवस्त्रं मन्त्रावृत्तिः, द्विवचनस्य देवतापरत्वात्। सव्यं पूर्वमाञ्जयित्वा ततो दक्षिणमाञ्जयीत। "सव्यं मनुष्या अञ्जते प्रथमम्" इति श्रुतेः। प्रतिचक्षुर्मन्त्रावृत्तिः ॥ ९ ॥

**अश्मनस्तेजोऽसि श्रोत्रं मे पाहि, इति कुण्ड-ले आबध्नीत ॥ १० ॥**

अनेन कुण्डले आबध्नीत। सुवर्णकुण्डले इत्यर्थः। अत्र दक्षिणं पूर्वं पश्चात्सव्यम्। मन्त्रावृत्तिरुक्ता ॥ १० ॥

**अनुलेपनेन पाणी प्रलिप्य मुखमग्रे ब्राह्म-णोऽनुलिम्पेत्, बाहू राजन्यः, उदरं वैश्यः, उपस्थं स्त्री, ऊरू सरणजीविनः ॥ ११ ॥**

पश्चाद्गात्राणि। कुतः, अग्रेवचनात्। अनुलेपनं कुङ्कुमादि। बाहू राजन्यः, अग्रे लिम्पेत्। उदरं वैश्यः, अग्रेऽनुलिम्पेत्। उपस्थं स्त्री, अग्रेऽनुलिम्पेत्। ऊरू सरणजीविनः, अग्रेऽनुलि-म्पेरन्। अयं विधिः सार्वत्रिकः। कुतः, स्त्रीविधानात् ॥ ११ ॥

**अनार्त्ताऽस्यनार्त्तोऽहं भूयासम्, इति स्रज-मपि बध्नीत न मालोक्ताम् ॥ १२ ॥**

मालेत्युक्तां स्रजमपि न बध्नीत ॥ १२ ॥

**मालेति चेद् ब्रूयुः स्रगित्यभिधापयीत ॥१३॥**

यद्यज्ञानात् मालेति ब्रूयुः ततः स्रगित्यभिधाप्य बध्नीत ॥१३॥

**देवानां प्रतिष्ठे स्थः यदि वञ्छुद्यासि, इति छत्रमादत्ते ॥ १४ ॥**

"उपानहौ चर्ममय्यौ ते आतिष्ठत्" इत्युपानहावास्थाय सकृन्मन्त्रः, द्विवचनात्। ततश्छत्रमादत्ते ॥ १४ ॥

**वेणुरसि वानस्पत्योऽसि सर्वतो मा पाहि, इति वैणवन्दण्डम् ॥ १५ ॥**

आदत्ते ॥ १५ ॥

**आयुष्यमिति सूक्तेन मणिं कण्ठे प्रतिमुच्योष्णीषं कृत्वा तिष्ठन् समिधोऽभ्यादध्यात् ॥१६॥**

आयुष्यमिति सूक्तग्रहणम् आयुष्यमित्येतावान् मन्त्र इति शङ्कानिवृत्त्यर्थम्। कुतः शङ्का, वाक्यस्य परिपूर्णत्वात्। आयुष्यमिति आयुष्करमित्यर्थः। तेन "नेजमेष्व" इत्यस्य खिलत्वेऽपि सूक्तग्रहणं सिद्धम्। मणिः सुवर्णमयः। उष्णीषं कृत्वा, अहतेन वाससा शिरो वेष्ट्येत्यर्थः। तिष्ठन्ग्रहणमन्यत्रासीनस्य कर्माणि भवन्तीति ज्ञापनार्थम् ॥ १६ ॥

अथ तृतीये अष्टमी कण्डिका।

---

अथ नवमी कण्डिका।

**स्मृतञ्चनिन्दा च विद्या च श्रद्धा प्रज्ञा च पञ्चमी। इष्टन्दत्तमधीतञ्च कृतं सत्यं श्रुतं**

व्रतम् । यदग्ने सैन्द्रस्य सप्रजापतिकस्य सऋषिकस्य सऋषिराजन्यस्य सपितृकस्य सपितृराजन्यस्य समनुष्यस्य समनुष्यराजन्यस्य साकाशस्य सातीकाशस्य सानुकाशस्य सप्रतीकाशस्य सदेवमनुष्यस्य सगन्धर्वाप्सरस्कस्य सहारण्यैश्च पशुभिर्ग्राम्यैश्च यन्म आत्मन आत्मनि व्रतन्तन्मे सर्वव्रतमिदमहमग्ने सर्वतो भवामि स्वाहेति ॥ १ ॥

स्मृतं च मे अस्मृतं च मे तन्म उभयव्रतमिति द्वादशाप्येवमेवोक्ता, ततो यदग्न इत्यादि यथासूत्रमित्येवमुपदिशन्ति। उपानहौ विसृज्य समिदाधानं कार्य्यम्। तथा च गौतमः। "सोपानत्क आसनाभिवादननमस्कारात् वर्जयेत्" इति ॥ १ ॥

ममाग्ने वर्च इति प्रत्यृचं समिधोऽभ्यादध्यात् ॥ २ ॥

अत्र खिलस्यापि ग्रहणं भवति। अथैतस्य समाम्नायस्येत्यत्र समाम्नायग्रहणस्य वितानविशेषणत्वात्, "समाम्नायस्य विताने" इति। कुतः एतत्, सूत्रे खिलानां पाठात्, इह च प्रतीकग्रहणात्, तस्माद्दशभिर्होम इति सिद्धम्। प्रत्यृचमिति व्याख्यातम्। आदध्यादिति प्रकृते पुनरादध्यादिति वचनं पूर्वस्याधिकारनिवृत्त्यर्थम्। तेनोपविश्यादध्यात्, न तिष्ठन्। स्विष्टकृदादिहोमशेषं समापयेत् ॥ २ ॥

यत्रैनं पूजयिष्यन्तो भवन्ति तत्रैतां रात्रीं वसेत् ॥ ३ ॥

यत्रात्मानं मधुपर्केण पूजयन्ति तत्रैतां रात्रीं वसेत् वसतिं कुर्य्यात्। कुतः एतत्, स्नातकायोपस्थितायेति वचनात् मधुपर्केण पूजनमिति लब्धम्। अस्य कालमाह ॥ ३ ॥

विद्यान्ते गुरुमर्थेन निमन्त्र्य कृत्वाऽनुज्ञातस्य वा स्नानम् ॥ ४ ॥

विद्यान्ते गुरुमर्थेन निमन्त्रयते "कमर्थमहन्ते करवाणि" इति। गुरुर्यमर्थमाह तं कृत्वा स्नानं करोति। अथवाऽनुज्ञातः स्नायात्। स्नानं समावर्त्तनमित्यर्थः। विद्यान्त इति व्याख्यातं प्राक् ॥ ४ ॥

तस्यैतानि व्रतानि भवन्ति ॥ ५ ॥

उपदेशादेव व्रतत्वे सिद्धे इदंवचनं नक्तं न स्नायामीत्येवं सङ्कल्पयेदित्येवमर्थम् ॥ ५ ॥

न नक्तं स्नायात्। न नग्नः स्नायात्। न नग्नः शयीत। न नग्नां स्त्रियमीक्षेतान्यत्र मैथुनात्। वर्षति न धावेत् ॥ ६ ॥

द्रुतगमनप्रतिषेधः ॥ ६ ॥

न वृक्षमारोहेत्। न कूपमवरोहेत्। न बाहुभ्यां नदीन्तरेत्। न संशयमभ्यापद्येत ॥ ७ ॥

अन्यांश्च प्राणसंशयान्नाभ्यापद्येत। यस्मादित्यं श्रूयते ... ऽयमर्थः। वर्षति न धावेदित्यादिप्रतिषेधोऽस्य प्राणसंशयाभ्यापादनप्रतिषेधत्वज्ञापनार्थः। अर्थसंशयाभ्यापादने न दोषः ॥ ७ ॥

महद्वै भूतं स्नातको भवतीति विज्ञायते ॥ ८ ॥

स्नातको हि महद्भूतं इति च श्रूयते। कथं पुनः स्नातकस्य महत्त्वम्।

उच्यते। दैवैश्चापि मनुष्यैश्च तिर्य्यग्योनिभिरेव च।

गृहस्थः सेव्यते यस्मात् तस्मात् श्रेष्ठो गृहाश्रमीति॥ स्मृतेः॥ ८॥

इति तृतीये नवमी कण्डिका।

---

अथ दशमी कण्डिका॥

## गुरवे प्रसच्यमाणो नाम प्रब्रुवीत॥ १॥

समावृत्तः अन् विसच्यमाणः शिष्यः गुरोर्नाम प्रब्रूयात् देवदत्तेति। गुरवे इति चतुर्थी षष्ठ्यर्थे। यथास्यै इति॥ १॥

## इदं वत्स्यामो भो इति॥ २॥

तत एवं प्रब्रुवीत। इदंशब्दस्य स्थाने आश्रमं निर्दिशेत्। देवदत्त गार्हस्थ्यं वत्स्यामो भो इति। वत्स्याम इति द्विवचनपाठे अर्थोऽनुपपन्नः॥ २॥

## उच्चैरूर्ध्वं नाम्नः॥ ३॥

नाम्न ऊर्ध्वं उच्चैर्ब्रूयात्। गुरुनाम तु उपांश्वेव ब्रूयादित्यर्थः॥ ३॥

## प्राणापानयोरुपांशु॥ ४॥

ततः प्राणापानयोरुरुव्यचा इत्येते मन्त्रं उपांशु ब्रूयाच्छिष्य इत्यर्थः। ननु उत्तरत्र वक्ष्यतातो वृद्धो जपतीति तस्मादाचार्य्यस्योपांशु दृष्टाविक्तस्याप्युपांश्वेव भविष्यत्यत उपांश्विति न वाच्यं। उच्यते। जपचोदनायां उपांशुत्वमनित्यमिति

ज्ञापनार्थमिदं तेन वेदारम्भणे उच्चैः प्रयोगः सिद्धः। अथ वा उच्चैरित्यधिकारनिवृत्त्यर्थमिदम्। वेदारम्भणे तु उच्चैष्ट्वे कारणमन्यदप्युक्तमेव ॥ ४ ॥

आ मन्द्रैरिन्द्र हरिभिरिति च ॥ ५ ॥

एतं चोपांशु ब्रूयाच्छिष्यः ॥ ५ ॥

अतो वृद्धो जपति प्राणापानयोरुरुव्यचास्तया प्रपद्ये देवाय सवित्रे परिददामीत्यृचश्च ॥६॥

अतो वृद्ध आचार्य्यो जपत्येतौ मन्त्रौ। अतो वृद्धो जपतीति वचनात् पूर्वं शिष्योऽप्येतौ मन्त्रौ जपतीति ज्ञायते। ऋचश्चेत्यामन्द्रैरित्येतामित्यर्थः ॥ ६ ॥

समाप्यो प्राक् स्वस्तीति जपित्वा महित्रीणामित्यनुमन्त्र्य ॥ ७ ॥

अति सृजेदिति शेषः। समाप्येति वचनमाचार्य्य एवो प्रागिति मन्त्रं जपेदित्येवमर्थम् जपित्वा महित्रीणामवोस्त्विति सूक्तेन शिष्यमनुमन्त्र्य वत्स्यथेत्यतिसृजेत् ॥ ७ ॥

एवमतिसृष्टस्य न कुतश्चिद्भयं भवतीति विज्ञायते ॥ ८ ॥

प्रशंसेयं श्रुतिमूलत्वदर्शनार्था ॥ ८ ॥

वयसाममनोज्ञा वाचः श्रुत्वा कनिक्रदज्जनुषं प्रब्रुवाण इति सूक्तं जपेद्देवीं वाचमजनयन्त देवा इति च ॥ ९ ॥

वयांसि पक्षिणः। अमनोज्ञा अप्रियाः ॥ ९ ॥

स्तुहिश्रुतङ्गर्त्तसदं युवानमिति मृगस्य ॥१०॥

मृगश्वामनोज्ञा वाचः श्रुत्वा एतां जपेत् ॥ १० ॥

यस्या दिशो बिभीयाद्यस्माद्वा तान्दिशमुल्मुकमुभयतः प्रदीप्तं प्रत्यस्येन्मन्थं वा प्रसव्यमालोड्याभयं मित्रावरुणामह्यमस्त्वर्चिषा शत्रून्दहन्तं प्रतीत्यमाज्ञातारं मा प्रतिष्ठां विन्दन्तु मिथो भिन्दाना उभयन्तु मृत्युमिति संसृष्टं धनमुभयं समाकृतमिति मन्थं न्यञ्चङ्करोति ॥ ११ ॥

यस्या दिशो बिभीयात् यस्माद्वा बिभीयात् पुरुषाद्व्याघ्रादन्यतो वा तां दिशं प्रति उभयतः प्रदीप्तमुल्मुकं प्रत्यस्येत् अभयमित्यनेन। मन्थं वा प्रसव्यमालोड्य तां दिशमभिमुखन्यञ्चं कुर्यात् संसृष्टमित्यनेन। मन्थन्यञ्चमेव कुर्यात्। न प्रत्यस्येदित्येवमर्थं पुनर्मन्थग्रहणम् ॥ ११ ॥

इति तृतीये दशमी कण्डिका ॥

---

अथ एकादशी कण्डिका ॥

सर्वतो भयादनाज्ञातादृष्टा वाज्याहुतीर्जुहुयात् पृथिवी धृता साग्निना धृता तया धृतया वर्त्या यस्माद्भयाद्बिभेमि तद्वारये स्वाहा। अन्तरिक्षं धृतं तद्वायुना धृतन्तेन धृतेन वर्त्मना यस्माद्भयाद्बिभेमि तद्वारये स्वाहा। द्यौर्धृता सादित्येन धृता तया धृतया वर्त्या यस्माद्भयाद्बिभेमि तद्वारये स्वाहा। दिशो धृतास्ताश्चन्द्रमसा धृतास्ता-

भिष्टं ताभिर्वर्चोभिर्यस्माद्भयाद्बिभेमि तद्वारये स्वाहा। आपो हतास्ता वरुणेन हतास्ताभिष्टं-ताभिर्वर्चोभिर्यस्माद्भयाद्बिभेमि तद्वारये स्वाहा। प्रजा हतास्ताः प्राणेन हतास्ताभिष्टंताभिर्वर्चो-भिर्यस्माद्भयाद्बिभेमि तद्वारये स्वाहा। वेदा हतास्ते छन्दोभिष्टंतास्तैष्टं तैर्वर्चैर्यस्माद्भयाद्बिभेमि तद्वारये स्वाहा। सर्वं हतं तद्ब्रह्मणा हतन्तेन हतेन वर्चेण यस्माद् भयाद् बिभेमि तद्वारये स्वाहा इति ॥ १ ॥

यदि सर्वतो दिग्भ्योभयमुत्पद्यते न च ज्ञायते अस्मात् पुरुषादिति तत् सर्वतोभयमज्ञातम्। तस्मात् यदि बिभीयात् ततो लौकिकाग्नावष्टावाज्याहुतीर्जुहुयात् पृथिवीहतेत्याद्यैः। अष्टौ वचनमाज्यभागस्विष्टकृन्निवृत्त्यर्थम्। आज्याहुतिवचनं परिस्तरणविकल्पार्थम् ॥ १ ॥

अथापराजितायां दिश्यवस्थाय स्वस्त्यात्रेयं जपति यत इन्द्र भयामह इति च सूक्तशेषम् ॥२॥

स्वस्त्यात्रेयमिति स्वस्तिनोमिमीतामिति सूक्तं सखिलम्। ततः सर्वप्रायश्चित्तादि समापयेत्। एवमतिसृष्टस्य न कुतश्चि-द्भयं भवतीत्युक्तम्। तत्र यद्यमनोज्ञा वाचः शृणुयात् भयं चोत्पद्येत तत एवं कुर्यादिति सर्वमिदमतिसृष्टविषयम् ॥ २ ॥

इति तृतीये एकादशी कण्डिका ॥

अथ द्वादशी कण्डिका ॥

संग्रामे समुपोल्हे राजानं सन्नाहयेत् ॥१॥

संग्रामे समुपोल्हे समुपस्थिते राजानं सन्नाहयेत् पुरोहितः वक्ष्यमाणविधिना ॥ १ ॥

आत्वाहार्षमन्तरेधीति पश्चाद्रथस्यावस्थाय ॥२॥

जपेदिति शेषः। अत्र ऋषभं मासमानानामित्यत्र च पादग्रहणे सूक्तग्रहणं भवतीति ज्ञापितञ्च प्राक् ॥ २ ॥

जीमूतस्येव भवति प्रतीकमिति कवचं प्रयच्छेत् ॥ ३ ॥

अस्य सूक्तस्याद्यया कवचं प्रयच्छेत् राज्ञे ॥ ३ ॥

उत्तरया धनुः ॥ ४ ॥

प्रयच्छेदिति शेषः ॥ ४ ॥

उत्तरां वाचयेत् ॥ ५ ॥

राजानं वाचयेत् ॥ ५ ॥

स्वयञ्चतुर्थीं जपेत् ॥ ६ ॥

स्पष्टम् ॥ ६ ॥

पञ्चम्येषुधिं प्रयच्छेत् ॥ ७ ॥

इषवो यत्र धीयन्ते स इषुधिः ॥ ७ ॥

अभिप्रवर्त्तमाने षष्ठीम् ॥ ८ ॥

यथेष्टान्दिशमभिप्रवर्त्तमाने रथे षष्ठीं जपेत्। एवंविधो मन्त्रो मन्त्रसंज्ञः ॥ ८ ॥

सप्तम्याश्वान् ॥ ९ ॥

अनुमन्त्रयेतेति शेषः ॥ ८ ॥

**अष्टमीमिषूनवेक्षमाणं वाचयति ॥ १० ॥**

इषूनवेक्षमाणं राजानम् अष्टमीं वाचयेत् ॥ १० ॥

**अहिरिव भोगैः पर्य्येति बाहुमिति तलं नह्यमानम् ॥ ११ ॥**

ज्याघातपरित्राणं तलमुच्यते तलं नह्यमानं राजानम् एतां वाचयेत् ॥ ११ ॥

**अथैनं सारयमाणमुपारुह्याभीवर्त्तं वाचयति प्रयोवां मित्रावरुणेति च द्वे ॥ १२ ॥**

सारथिना सारयमाणं राजानं रथे उपारुह्य अभीवर्त्तेनेति सूक्तं वाचयेत्। प्रयोवामित्यृचौ च ॥ १२ ॥

**अथैनमन्वीक्षेताप्रतिरथेशास सौपर्णैः ॥१३॥**

एनं राजानमन्वीक्षेत एतैः सूक्तैः। आशुःशिशान इति सूक्तमप्रतिरथम्। शास इत्थेति सूक्तं शासः। सौपर्णसूक्तानां बहुत्वाद्विशेषमाह ॥ १३ ॥

**प्रधारयन्तु मधुनो घृतस्येत्येतत् सौपर्णम् ॥१४॥**

एतत् सूक्तं सौपर्णं भवति। नान्यत् ॥ १४ ॥

**सर्वा दिशोऽनुपरीय्ययात् ॥ १५ ॥**

अथ राजा सर्वा दिशो रथेनानुक्रमेण गच्छेत् ॥ १५ ॥

**आदित्यमौशनसं वावस्थाय प्रयोधयेत् ॥१६॥**

यस्यां दिश्यादित्यस्तां दिशमास्थायाहनि चेत्। रात्रौ चेद्यस्यां दिशि शुक्रः तां दिशं परिगृह्य योधयेद्राजा। न प्रत्यादित्यं युध्येत नापि प्रतिशुक्रमित्यर्थः ॥ १६ ॥

उपश्वासय पृथिवीमुत द्यामिति तृचेन दुन्दुभिमभिमृशेत् ॥ १७ ॥

राजा ॥ १७ ॥

अवसृष्टा परापतेतीषून्विसर्जयेत् ॥ १८ ॥

राजा ॥ १८ ॥

यत्र बाणाः सम्पतन्तीति युध्यमानेषु जपेत् ॥१९॥

पुरोहितः ॥ १९ ॥

संशिष्याद्वा संशिष्याद्वा ॥ २० ॥

अथवा राज्ञे पुरोधा आचक्षीत एकस्मिन् काले इयमृक् तवेति। यथा आत्वाहार्षमिति सूक्तं पश्चाद्रथस्यावस्थाय ब्रूहि जीमूतस्येति कवचं गृहाणेत्येवमादि। अध्यायान्तलक्षणार्थं द्विर्वचनार्थम् ॥ २० ॥

इति तृतीये द्वादशी कण्डिका ॥

इत्याश्वलायनगृह्यसूत्रविवरणे नारायणीयायां वृत्तौ तृतीयोऽध्यायः।

---

## चतुर्थोऽध्यायः।

### अथ प्रथमा कण्डिका।

आहिताग्निश्चेदुपतपेत्प्राच्यामुदीच्यामपराजितायां वा दिश्युदवस्येत् ॥ १ ॥

आहिताग्निश्चेत् व्याधिरुपतपेत् पीडयेत्। तथा सति आहिताग्निरग्निभिः सह ग्रामान्निष्क्रम्य प्राच्यामुदीच्याम-

पराजितायां वा दिशि उदवस्येत्। गत्वा तत्रैव तिष्ठेत् यावदगदो भवति ॥ १ ॥

**ग्रामकामा अग्नय इत्युदाहरन्ति ॥ २ ॥**

अग्नयो ग्रामकामा इति ब्रह्मवादिनः प्रवदन्ति। तस्मादुदवस्येत्। ग्रामकामत्वे सत्यपि किमित्युदवस्येदित्याशङ्क्याह ॥ २ ॥

**आशंसन्त एनं ग्राममाजिगमिषन्तोऽगदं कुर्य्युरिति ह विज्ञायते ॥ ३ ॥**

ग्राममागन्तुमिच्छन्तोऽग्नय एनमाहिताग्निमाशंसन्ते। अयमगदो भवेदिति। आशंसमानाश्च एनम् अगदम् अरोगं कुर्य्युः एवं हि श्रूयते। श्रुत्याकर्षो गृह्यकर्म समुत्पन्नश्रुतिमूलमिति दर्शनार्थः सर्वत्र ॥ ३ ॥

**अगदः सोमेन पशुनेष्ट्येष्ट्वावस्येत् ॥ ४ ॥**

अगदः अरोगः। सोमादिभिरिष्ट्वा ग्रामं प्रविशेत्। अथ कः सोमः कार्य्यः अग्निष्टोमः। कुतः सर्वसोमानां प्रकृतित्वात्। उक्तं च। स एव होतुः प्रकृतिभाव इति। कः पशुः कार्य्य ऐन्द्राग्नः। निरूढानां प्रकृतित्वात्। इष्टीनां पौर्णमासातिदेशोऽस्ति। सर्वत्र देवतागमे नित्यानामपाय इति ब्रुवता अनागमे अनपाय इत्यपि दर्शितं भवति। तेनेष्टौ पशौ च प्रकृता एव देवता इति सिद्धम्। तद्दोष्टौ तिस्रः प्रसज्येरन्। अग्नीषोमयोः स्थाने इन्द्राग्नी इति ब्रुवता अग्नेः स्थिरत्वं दर्शितम्। तेनाग्निरेव केवलो भवति नान्ये द्वे। अत्र पूर्वालाभ उत्तरोत्तरं कर्मेत्युपदिशन्ति ॥ ४ ॥

**अनिष्ट्वा वा ॥ ५ ॥**

ग्रामं प्रविशेत् ॥ ५ ॥

संस्थिते भूमिभागं खानयेद्दक्षिणपूर्वस्यान्दिशि दक्षिणापरस्यां वा ॥ ६ ॥

अगदे सत्युक्तम्। अथ संस्थिते मृते सत्युच्यते। भूम्येकदेशं खानयेत्। आग्नेय्यां नैर्ऋत्यां वा ॥ ६ ॥

दक्षिणाप्रवणं प्राग्दक्षिणाप्रवणं वा प्रत्यग्दक्षिणाप्रवणमित्येके ॥ ७ ॥

खातं दक्षिणाप्रवणं खानयेत्। आग्नेयीप्रवणं वा ॥ ७ ॥

यावानुद्बाहुकः पुरुषस्तावदायामम् ॥ ८ ॥

यावत्परिमाण ऊर्द्ध्वबाहुकः पुरुषस्तावत्परिमाणं दीर्घं भवति खातम् ॥ ८ ॥

व्याममात्रन्तिर्यक् ॥ ९ ॥

पञ्चारत्निमात्रं व्याम भवति। तिर्यग्खातावन्मात्रं भवेत् ॥ ९ ॥

वितस्त्यर्वाक् ॥ १० ॥

द्वादशाङ्गुलो वितस्तिः। तावन्मात्रमधस्तः कुर्य्यात्। खातलक्षणमुक्त्वा तस्य देशमाह ॥ १० ॥

अभित आकाशं श्मशानम् ॥ ११ ॥

श्मशानग्रहणेनात्र श्मशानद्वयं गृह्यते। कुतः। उत्तरत्र विशेषणाटादहनस्य लक्षणं श्मशानस्येति। दहनदेशश्च श्मशानं सञ्चित्य यत्रास्थीनि निधीयन्ते तच्च श्मशानम्। तद्द्वयं सर्वत आकाशं भवेत्। अभित आकाशमिति ब्रुवता मध्ये तदनाकाशं भवेदिति ज्ञाप्यते ॥ ११ ॥

बहुलौषधिकम् ॥ १२ ॥

तत् उभयं बहुलौषधिकं भवेत् ॥ १२ ॥

कण्टकिक्षीरिणस्त्विति यथोक्तं पुरस्तात् ॥१३॥

कण्टकिक्षीरिणस्त्विति यथोक्तं वास्तुपरीक्षायां तथेहापि कुर्य्यात् कण्टक्यादीनि षङ्‌द्वासयेत्। उभयश्मशानेऽपीत्यर्थः ॥ १३ ॥

यत्र सर्वत आपः प्रस्यन्देरन्नेतदादहनस्य लक्षणं श्मशानस्य ॥ १४ ॥

यस्मिन् देशे सर्वत आपो गच्छन्ति। एतदादहनश्मशानस्य लक्षणम्। नास्थिनिधानस्य श्मशानस्य। पूर्वाणि तूभयस्येत्युक्तम्। सर्वतो निम्नो मध्यत उच्छ्रितो यो देशः पूर्वोक्तलक्षणयुक्तश्च भवेत् तत्र दाहनयेदित्यर्थः ॥ १४ ॥

केशश्मश्रुलोमनखानीत्युक्तं पुरस्तात् ॥१५॥

केशश्मश्रुलोमनखानीति यदुक्तं पुरस्तात् सूत्रस्य षष्ठाध्याये दीक्षितमरणे तदिहापि कुर्य्यात् इत्यर्थः। तत्रैवमुक्तम्। संस्थिते तीर्थेन निष्कृस्यापरस्थे प्रेतालङ्कारान् कुर्वन्ति केशश्मश्रुलोमनखानि वापयन्ति नलदेनानुलिम्पन्ति। नलदमभियुक्तेभ्यो विज्ञेयम्। निःपुरीषमेके कृत्वा पृषदाज्यस्य पूरयन्ति अहतस्य वाससः पाशतः पादमात्रमविच्छिद्य प्रोर्णुवन्ति प्राग्दशेनाविः पादम्। मूलम्पाशः। अग्रं दशा। प्राक्शिरसं प्रेतं शाययित्वा प्रेतं प्रोर्णुयुः। वासः अग्रं पादतो यथा भवेदित्यर्थः। अवच्छेदं प्रेतस्य पुत्रा अमात्याः कुर्वीरन्निति। संगृह्णीयुरित्यर्थः ॥ १५ ॥

द्विगुल्फं बर्हिराज्यस्य ॥ १६ ॥

द्विगुल्फं प्रभूतं बर्हिराज्यञ्च उपकल्पयेदिति शेषः ॥१६॥

**दधन्यत्र सर्पिरानयन्त्येतत्पित्र्यं पृषदाज्यम्**
**॥ १७ ॥**

अत्र प्रेतकर्मणि दधनि सर्पिरानयन्ति। एतत् पृषदाज्यं भवति। तच्च बहु कल्पयेत्। आसेचनवन्ति पृषदाज्यस्येत्यत्रैतत् गृह्णीयात्। अत्र ग्रहणं प्रेतकर्मणि सर्वत्रैतदेव पृषदाज्यं भवतीत्येवमर्थम्। तेन निःपुरीषमेके कृत्वा पृषदाज्यस्य पूरयन्तीत्यत्रापि अस्यैव पृषदाज्यस्य ग्रहणं सिद्धम्। आनयन्तीति बहुवचनं कर्त्तुरनियमार्थम्। पित्र्यमिति पित्र्यकर्मसम्बन्धि एतत् पित्र्यं पृषदाज्यमित्यर्थः। एवं ब्रुवता प्रेतकर्मापि पितृकर्मेत्युक्तं भवति। तेनास्मिन् कर्मणि प्राग्दक्षिणाभिमुखत्वं कर्मणां कर्तॄणाञ्च सिद्धम्। प्राचीनावीतित्वञ्च भगवता बौधायनेनाप्युक्तम्। किमु खलु प्राचीनावीतिना पितृमेधः कार्य्यः। यज्ञोपवीतिना चेति प्राचीनावीतिनेत्येव ब्रूयात्। पितॄणां वा एष मेधो देवानां वा अन्ये मेधा भवन्ति। निवीतिनस्त्वेवैनं वहेयुः इति। आग्नेयीं दिशं प्रस्तुत्य एषा हि पितॄणां प्राची दिगिति विज्ञायते इति चोक्तम् ॥ १७ ॥

इति चतुर्थे प्रथमा कण्डिका॥

---

अथ द्वितीया कण्डिका।

**अथैतान्दिशमग्नीन्नयन्ति यज्ञपात्राणि च ॥१॥**

यस्यान्दिशि भूमिभागः खानितः तान्दिशं प्रत्यग्नीन्नयन्ति। ततो यज्ञपात्राणि च नयन्ति बान्धवाः ॥ १ ॥

**अन्वञ्चं प्रेतमयुजोऽमिथुनाः प्रवयसः ॥२॥**

यज्ञपात्राणामन्वञ्चं पृष्ठभागतः प्रेतं नयन्ति। अयुजो विषमाः अमिथुनाः स्त्रियः पुरुषाश्च न मिश्राः स्युरित्यर्थः। प्रवयसः प्रगतवयसो वृद्धा इत्यर्थः। उपदेशादेव पृष्ठतो भावे सिद्धे अन्वञ्चग्रहणं पूर्वत्वानियमज्ञापनार्थम्। तेन अग्नयो वा प्रथमन्नीयेरन् यज्ञपात्राणि वेत्यनियमः सिद्धः ॥ २ ॥

**पीठचक्रेण गोयुक्तेनेत्येके ॥ ३ ॥**

एके गोयुक्तेन पीठचक्रेण शकटादिना प्रेतनयनङ्कार्य्यमित्याहुः ॥ ३ ॥

**अनुस्तरणीम् ॥ ४ ॥**

अत्राप्येकग्रहणं सम्बध्यते। मध्यगतस्य विशेषाभावात् प्रयोजनवत्त्वाच्च। तेनानुस्तरणी अनित्या कात्यायनेनाप्युक्तम्। न वास्थिसन्देहादिति। अनुस्तरणी कृता चेदस्थिसञ्चयनकाले कानि यजमानस्याकस्थीनि कानि वा अनुस्तरण्या इति सन्देहः स्यात् तस्मान्न भवतीत्यर्थः। प्रेतमनुस्तर्य्यते या स्त्री पशुः सानुस्तरणी तामेके इच्छन्ति ॥ ४ ॥

पशुविशेषमाह।

**गाम् ॥ ५ ॥**

तामनुस्तरणीं गां कुर्य्यात् ॥ ५ ॥

**अजां वैकवर्णाम् ॥ ६ ॥**

अजां वा येन केनचिदेकेन वर्णेन युक्तां कुर्य्यात् ॥ ६ ॥

**कृष्णामेके ॥ ७ ॥**

इच्छन्ति ॥ ७ ॥

**सव्ये बाहू बद्धानुसङ्कालयन्ति ॥ ८ ॥**

पशोः सव्ये बाहौ रज्जुं बद्धा अनु प्रेतस्य पृष्ठतः सञ्चालयन्ति नयन्ति बान्धवाः ॥ ८ ॥

**अन्वञ्चोऽमात्या अधोनिवीताः प्रवृत्तशिखा ज्येष्ठप्रथमाः कनिष्ठजघन्याः ॥ ९ ॥**

गच्छेयुरिति शेषः। प्रेतस्य पृष्ठतोऽमात्या बान्धवा अधोनिवीतं येषान्ते अधोनिवीता अनुपरि वाससः यज्ञोपवीतानि चाधःकृत्वेत्यर्थः। प्रवृत्तशिखाः विमुक्तकेशाः ज्येष्ठप्रथमा इत्युच्यमाने सर्वेषां यो ज्येष्ठः स प्रथमः स्यादितरेषां अनियमः स्यात्। तस्माद्यो यो ज्येष्ठः स स प्रथमो गच्छेत् यो यः कनिष्ठः स स पृष्ठतो गच्छेत्। इत्यानुपूर्व्वीसिद्ध्यर्थमुभयवचनम्। एवंभूता गच्छेयुः ॥ ९ ॥

**प्राप्यैवं भूमिभागङ्कर्त्तोदकेन शमीशाखया त्रिः प्रसव्यमायतनं परिव्रजन् प्रोक्षत्यपेतवीत-विचसर्पतात इति ॥ १० ॥**

एवं सर्वं भूमिभागं प्राप्य ततो दहनस्य कर्त्ता उदकेन शमीशाखया त्रिरप्रदक्षिणमायतनम्परिव्रजन् प्रोक्षति अपेत-वीतेत्यनया मन्त्रावृत्तिरुक्ता। आयतनं खातमित्यर्थः। अन्ये गर्त्तोदकेनेति पठन्ति। अयमर्थः। खातखननकाले उत्तर-पुरस्तादाहवनीयस्य जानुमात्रङ्गर्त्तं खात्वा तत्रापो निषिच्या-वकांशैपालस्वावधाय तदुदकेनेति। कर्त्ता तु स्मृतिगम्यः ॥१०॥

**दक्षिणपूर्व उद्धृतान्त आहवनीयं निदधाति ॥ ११ ॥**

दक्षिणपूर्वे देशे खातस्यान्ते एकदेशे आहवनीयंनिदध्यात् । खाताद्बहिरित्येके । उत्तरत्राप्येवं नेयम् ॥ ११ ॥

**उत्तरपश्चिमे गार्हपत्यम् ॥ १२ ॥**

उद्धृतान्ते निदधातीति वर्त्तते ॥ १२ ॥

**दक्षिणपश्चिमे दक्षिणम् ॥ १३ ॥**

इयं वर्त्तते ॥ १३ ॥

**अथैनमन्तर्वेदीध्मचितिं चिनोति यो जानाति ॥ १४ ॥**

अथशब्दः कर्मान्तरास्तित्वज्ञापनार्थः । तेन प्रणीता अस्मिन् काले चमसेन प्रणयेत् । अनुमन्त्रणादर्शनात् । अन्यत्तु मन्त्रेनेति वक्ष्यामः । अपि चास्मिन् काले खाते हिरण्यशकलं निधाय तिलानवकीर्य्य तत इध्मचितिं चिनुयादिष्टित्वात् । अग्नीनां मध्ये खाते इध्मभूताश्चितिं दहनसमर्थां चिनोति कुशलो यो जानातीति कर्त्तुरनियमः । एनमिति वचनमिदानीमेनश्चिनुयादुपरिष्टाच्चार्थप्राप्तमपि कुशल एव चिनुयादित्येवमर्थः ॥ १४ ॥

**तस्मिन् बर्हिरास्तीर्य्य कृष्णाजिनञ्चोत्तरलोम तस्मिन् प्रेतं संवेशयन्त्युत्तरेण गार्हपत्यं हृत्वाहवनीयमभिमुखशिरसम् ॥ १५ ॥**

अथ कर्त्ता तस्मिंश्चितौ बर्हिरास्तृणाति ततः कृष्णाजिनञ्चोर्द्ध्वलोमास्तृणाति कर्त्तैव, क्त्वाप्रत्यये पूर्वकालतामात्रमेव विवक्षितं न समानकर्त्तृत्वमिति साधितं प्राक् । अथ तस्मिन् कृष्णाजिने उत्तरेण गार्हपत्यं प्रेतं नीत्वा तत आहवनीयमभिमुखशिरसं प्रेतं संवेशयन्ति बान्धवाः ॥ १५ ॥

उत्तरतः पत्नीम् ॥ १६ ॥

ततः प्रेतस्योत्तरतः प्रेतस्य पत्नीं संवेशयन्ति। शाययन्तीत्यर्थः। चितावेव उपवेशयेय इति लिङ्गात् एतावद्वर्णत्रयस्यापि समानम् ॥ १६ ॥

धनुश्च क्षत्रियाय ॥ १७ ॥

प्रेतः क्षत्रियश्चेद्धनुरप्युत्तरतः संवेशयन्ति ॥ १७ ॥

तामुत्थापयेद्देवरः पतिस्थानीयोऽन्तेवासी जरद्दासो वोदीर्ष्वनार्य्यभिजीवलोकमिति ॥ १८ ॥

अथ पत्नीमुत्थापयेत् कः देवरः पतिस्थानीयः स पतिस्थानीय इत्युच्यते। अनेन ज्ञायते पतिकर्तृकं कर्म पुंसवनादि पत्यसम्भवे देवरः कुर्य्यादिति। अन्तेवासी शिष्यः। स वा। यो बहुकालं दास्यं कृत्वा वृद्धोऽभूत् स वा ॥ १८ ॥

कर्त्ता वृषले जपेत् ॥ १९ ॥

जरद्दासे उत्थापयितरि कर्त्ता मन्त्रं ब्रूयात्। अन्यदोत्थापयितैव ब्रूयात् ॥ १९ ॥

धनुर्हस्तादाददानो मृतस्येति धनुः ॥ २० ॥

धनुरित्यृचा धनुरुत्थापयेदपनयेदित्यर्थः। कः देवरादिः ॥ २० ॥

उक्तं वृषले ॥ २१ ॥

कर्त्ता वृषले जपेदित्यर्थः ॥ २१ ॥

अधिज्यं कृत्वा सञ्चितिमचित्वा संशीर्यानु प्रहरेत् ॥ २२ ॥

अर्थप्राप्तं यत् प्रेतस्योपरि सञ्चयनं तस्मिन् काले सचिवैः प्रागधिज्यं कृत्वा धनुरुपरिज्यं कृत्वा संशीर्य्य भंक्त्वा क्षिपेत्। प्रेतस्योत्तरतश्चितावेवोपरि सञ्चितिस्तु उरसि होमानन्तरं कार्य्या। धनुःसंवेशनं धनुरुपनयनं धनुःस्तु प्रहरणमिति क्षत्रियस्य विशेषः। अन्यत्सर्वं त्रयाणां समानम् ॥ २२ ॥

इति चतुर्थे द्वितीया कण्डिका ॥

---

अथ तृतीया कण्डिका।

## अथैतानि पात्राणि योजयेत् ॥ १ ॥

अथशब्दोऽस्मिन् काले मर्मान्तरास्तित्वज्ञापनार्थम्। तेन हिरण्यशकलैः प्रेतस्य सप्तच्छिद्राणि शीर्षण्यान्यपिधत्ते। आस्यन्नासिकाद्वयम् अक्षिद्वयं कर्णद्वयम् इति। घृतसिक्तांश्च तिलान् प्रेते अवकिरेत्। ततः पात्रयोजनम्। एतानीति विद्यमानानि निर्दिश्यन्ते। प्राकृतानि वैकृतानि च। तत्र प्राकृतानां पात्राणां यावज्जीवं धारणमस्ति अग्निवत्सर्वकर्म-शेषत्वात्। अग्न्याधाने उत्पन्नानि प्राकृतानि। वैकृतौ तु वरुणप्रघासादावुत्पन्नानां कर्मान्ते उत्सर्गः। विकृतिमध्ये मृतश्चेत्तेषामपि योजनं कार्य्यम्। विनियोगविधानसा-मर्थ्यादेव वैकृतानामपि ग्रावादीनां धारणं कार्य्यमित्या-शङ्का न कार्य्या। विधानस्य कर्ममध्ये कृतार्थत्वात्। प्राकृ-तानां धारणे कारणमन्यदुक्तम्। तेन यावन्ति पात्राणि विद्यन्ते प्राकृतानि वैकृतानि च तावतां सर्वेषामेव योजन-ङ्कार्य्यम्। न पुनर्विनियोगविधानसामर्थ्याद्धारणं कार्य्यम् अन्यतो धृतानां योजनमेव विधीयत इति सिद्धम् ॥ १ ॥

## दक्षिणे हस्ते जुहूम् ॥ २ ॥

योजयेदिति सर्वत्र सम्बन्धनीयम्। वरुणप्रघासादौ स्रुतश्रेत्जुहूद्वयमपि योजनीयम्। एकवचनन्तु दशापवित्रेण ग्रहं सम्मार्ष्टीतिवदविवक्षितम् ॥ २ ॥

**सव्य उपभृतम् ॥ ३ ॥**

एकवचनं पूर्ववत् ॥ ३ ॥

**दक्षिणे पार्श्वे स्फ्यम्। सव्येऽग्निहोत्रहवणीं ॥ ४ ॥**

ययाग्निहोत्रं हूयते साग्निहोत्रहवणी ॥ ४ ॥

**उरसि ध्रुवाम् शिरसि कपालानि। दत्सु ग्राव्णः ॥ ५ ॥**

दन्तेषु ग्राव्णो योजयेत् सोममध्ये स्रुतश्चेत्। अन्यत्र तु अवभृथे त्यजन्ते। अत एव ज्ञायते सोमयाजिनोऽग्निचितश्चैतदेव मच्चयनान्तं विधानन्नाधिकमिति। यत् तु परैरुक्तं पैष्गान्तं सोमयाजिनः चित्यन्तमग्निचित इति तदाचार्य्यस्य नेष्टम्। अत एव न प्रदर्शितम्। कात्यायनादिभिरपि तन्न विहितमेव। न बह्वृचैर्वाजसनेयिभिर्वा पुनर्दहनं लोष्टचितिर्वा स्वयमाचार्य्यते। बह्वल्पं वा स्वगृह्योक्तमिति वचनात्तन्न कार्य्यम् ॥ ५ ॥

**नासिकयोः स्रुवौ ॥ ६ ॥**

द्विवचनं विकल्पापेक्षं अध्वर्युवशादग्निहोत्रार्थं वा द्वितीयम् ॥ ६ ॥

**भित्त्वा चैकम् ॥ ७ ॥**

एकश्चेत् स्रुवस्तथा सति तं स्रुवं भित्त्वा नासिकाद्वये योजयेत् ॥ ७ ॥

**कर्णयोः प्राशित्रहरणे ॥ ८ ॥**

द्विवचनं पूर्ववत् ॥ ८ ॥

**भित्त्वा चैकम् ॥ ९ ॥**

पूर्ववदिति ॥ ९ ॥

**उदरे पात्रीम् ॥ १० ॥**

यस्यां हवींषि साद्यन्ते सा पात्री ॥ १० ॥

**समवत्तधानञ्च चमसम् ॥ ११ ॥**

यस्मिन्नुपह्वापनार्थं अवत्ता इड़ा धीयते स चमसः समवत्तधानः तश्चोदरे योजयेत् ॥ ११ ॥

**उपस्थे शम्याम् ॥ १२ ॥**

ऊर्वोरूर्ध्वप्रदेश उपस्थः ॥ १२ ॥

**अरणीमूर्वोः । उलूखलमुसले जङ्घयोः ॥१३॥**

यथासङ्ख्यम् ॥ १३ ॥

**पादयोः शूर्पे ॥ १४ ॥**

इदमपि द्विवचनं विकल्पयेत्तम् ॥ १४ ॥

**छित्त्वा चैकम् ॥ १५ ॥**

एकञ्चेच्छूर्पं छित्त्वा पादयोर्योजयेत् । अनिर्दिष्टानि तु पात्राण्यनियतकालानि अनियतदेशानि भवन्ति ॥ १५ ॥

**आसेचनवन्ति पृषदाज्यस्य पूरयन्ति ॥१६॥**

यानि पात्राण्यासेचनवन्ति बिलवन्ति पृषदाज्यधारणसमर्थानीत्यर्थः । तानि पृषदाज्यस्य पूरयन्ति । बहुवचनङ्कर्तुरनियमार्थम् । 'पूरयित्वा पूरयित्वा योजयेत् । कुतः एतत् । धर्मोत्पादने तथा दृष्टत्वात् ॥ १६ ॥

अमा पुत्रो दृषदुपले कुर्वीत ॥ १७ ॥

दृषदुपले पुत्रः अमा कुर्वीत आत्मन उपयोगार्थं संगृह्णी-यादित्यर्थः। तेन गृह्णामानयेदिति ॥ १७ ॥

लौहायसञ्च कौलालम् ॥ १८ ॥

संगृह्णीयात्। अन्यानि सर्वाणि यज्ञायुधानि योजयेत् ॥ १८ ॥

अनुस्तरण्यावपामुत्खिद्य शिरोमुखं प्रच्छा-दयेदग्नेर्वर्मपरिगोभिर्व्ययस्वेति ॥ १९ ॥

वपामुत्खिद्य प्रेतस्य शिरोमुखञ्च प्रच्छादयेत्। अग्नेरि-त्यृचा। उत्खिद्यवचनमुत्खेदनमेव कार्य्यम्। नान्यत्याशुकं तन्त्रमित्येवमर्थम्। संज्ञपनं त्वर्थप्राप्तम् ॥ १९ ॥

वृक्का उद्धृत्य पाण्योरादध्यादति द्रव सारमेयौ श्वानाविति दक्षिणे दक्षिणं सव्ये सव्यम् ॥२०॥

ततो वृक्का उद्धृत्य प्रेतस्य पाण्योरादध्यात्। अतीत्यृचा। दक्षिणे पाणौ दक्षिणं वृक्कं सव्ये सव्यं सकृन्मन्त्रः ॥ २० ॥

हृदये हृदयम् ॥ २१ ॥

हृदयमुद्धृत्य हृदय आदध्यात्तूष्णीम् ॥ २१ ॥

पिण्डौ चैके ॥ २२ ॥

एके पिण्डौ च पाण्योरादध्यादित्याहुः। एवं वृक्कयोः पिण्डयोश्च समुच्चयः ॥ २२ ॥

वृक्कापचार इत्येके ॥ २३ ॥

एके वृक्काभावे पिण्डावादध्यादित्याहुः अनुस्तरणी नित्या चेत् वृक्कापचारो नोपपद्यते। तस्मादनित्येति मन्यामहे।

अनुस्तरण्यपचार इति वक्तव्ये वृक्कापचार इति वचनं पिण्डयो-र्वृक्काधानस्थाने आधानसिद्ध्यर्थम्। तेन पाण्योरिति सिद्धम्। अथ किं द्रव्यौ पिण्डौ। अन्नपिण्डावित्येके। सक्तुपिण्डा-वित्यपरे। उक्तञ्च कात्यायनेन। अथ यदानुस्तरणी नास्ति तदा सक्तुहवींषि तत्स्थाने कुर्यात्। पिण्डग्रहणमुपलक्षणम्। तेन वपादिसर्वं पशुना कार्य्यं सक्तुभिरेव निर्वर्त्तयेदित्येके। अत्र पक्षे वपास्थाने अपूपः। वृक्कस्थाने पिण्डौ। अन्यान्यपि तत्तदङ्गसदृशानि सक्तुभिरेव कार्य्याणि॥ २३॥

**सर्वां यथाङ्गं विनिक्षिप्य चर्मणा प्रच्छा-द्येममग्ने चमसं माविजिह्वर इति प्रणीताप्रण-यनमनुमन्त्रयते॥ २४॥**

अनुस्तरण्याश्चर्म पृथक्कृत्य सर्वामिति वचनादखण्डितामेव यथाङ्गमिति प्रेतस्य यद्यदङ्गम्पादादि तस्मिंस्तस्मिन्नङ्गे पशो-रपि तत्तदङ्गं यथा भवेत्तथा विनिक्षिप्य तस्या एव चर्मणा प्रच्छाद्य तत इममित्यृचा पूर्णचमसं अनुमन्त्रयेत् यः पूर्वनि-हितः॥ २४॥

**सव्यं जान्वाच्य दक्षिणाग्नावाज्याहुतीर्जुहु-यादग्नये स्वाहा सोमाय स्वाहा लोकाय स्वाहा-नुमतये स्वाहेति॥ २५॥**

सव्यमिति दक्षिणनिवृत्त्यर्थम्। तज्जानु निपात्य दक्षिणा-ग्नावाज्याहुतीर्जुहुयात् चतुर्भिर्जानुनिपातनमुपस्थोत्थानत्वा-विरोधेन कर्त्तव्यं सर्वत्र। न्यग्भावे शवादिना गृह्यकारेण दोष-स्योक्तत्वात्। आज्याहुतिवचनं तन्त्रनिवृत्त्यर्थमिष्यते। होमा-र्थमन्यः स्रुवः कार्य्यः। पूर्वस्य योजितत्वात्॥ २५॥

पञ्चमीमुरसि प्रेतस्यास्माद्वै त्वमजायथा अयन्त्वदधिजायतामसौ स्वर्गाय लोकाय स्वाहेति ॥ २६ ॥

प्रेतस्य हृदये पञ्चमीं आहुतिं जुहुयात्। अस्मादिति मन्त्रेण। पञ्चमीमिति वचनं इमामपि जान्वाच्य जुहुयात् इत्येवमर्थम्। प्रेतग्रहणमनर्थकं पश्यामः यथा दक्षिणे हस्ते जुहुमित्युक्ते प्रेतस्येति गम्यते प्रेताधिकारादेवमिहापि गम्यते एव। उच्यते। प्रेतग्रहणं सर्वस्यापि प्रेतस्येमाम्पञ्चमीं जुहुयान्नाहिताग्नेरेवेत्येवमर्थम्। एतदुक्तं भवति। यस्य यस्य प्रेतस्य स्मृतौ दहनं विहितन्तं तं प्रेतमनेन विधिना दहेदिति। विशेषस्तूत्तरत्र वक्ष्यामः। असावित्यस्य स्थाने प्रेतस्य नाम सम्बुद्ध्या निर्दिशेत् ॥ २६ ॥

इति चतुर्थे तृतीया कण्डिका ॥

---

अथ चतुर्थी कण्डिका ॥

प्रेष्यति युगपदग्नीन् प्रज्वालयतेति ॥ १ ॥

अथ। परिकर्मिणः कर्त्ता प्रेष्यति युगपदेव सर्वानग्नीन् प्रज्वालयतेति। ते च तथा कुर्य्युः। अत्र विज्ञापनमाह ॥ १ ॥

आहवनीयश्चेत् पूर्वं प्राप्नुयात् स्वर्गलोक एनं प्रापदिति विद्याद्राध्स्यत्यसावमुत्रैवमयमस्मिन्निति पुत्रः ॥ २ ॥

आहवनीयश्चेदाहिताग्निशरीरं प्रथमं प्राप्नुयात् स्वर्गं लोक एनं आहिताग्निं प्रापयेदिति जानीयात्। राध्स्यति

ऋद्धिमाप्स्यति असावाहिताग्निरमुत्र स्वर्गे। एवमयं पुत्रः अस्मिन् मनुष्यलोके ऋद्धिं प्राप्स्यतीति विद्यात्। एवमुत्तरत्रापि योज्यम्। अनेनानुष्ठितस्य कर्मणः फलविज्ञानमुक्तं न तु पूर्वप्राप्तेरदं फलम् ॥ २॥

**गार्हपत्यश्चेत् पूर्वं प्राप्नुयादन्तरिक्षलोक एनं प्रापदिति विद्याद्राध्स्यत्यसावमुत्रैवमयमस्मिन्निति पुत्रः ॥ ३ ॥**

गार्हपत्यस्य पूर्वप्राप्तावाहिताग्निरन्तरिक्षलोकं प्राप्य तत्र राध्स्यति पुत्रस्त्वस्मिन्निति विद्यात् ॥ ३ ॥

**दक्षिणाग्निश्चेत् पूर्वं प्राप्नुयान्मनुष्यलोक एनं प्रापदिति विद्याद्राध्स्यत्यसावमुत्रैवमयमस्मिन्निति पुत्रः ॥ ४ ॥**

दक्षिणाग्नेः पूर्वप्राप्तौ क्षिप्रमेवोत्पद्य बह्वन्नं प्राप्नोति मनुष्यलोकं आहिताग्निः पुत्रश्चास्मिंल्लोके बह्वन्नो भवतीति विद्यात् ॥ ४ ॥

**युगपत्प्राप्तौ परामृद्धिं वदन्ति ॥ ५ ॥**

यदि सर्वे अग्नयो युगपच्छरीरं प्राप्नुयुस्तदाहिताग्नेर्विशिष्टस्थाने अत्युत्कृष्टामृद्धिं वदन्ति ब्रह्मवादिनः पुत्राणाञ्च अस्मिंल्लोके परामृद्धिं वदन्ति ॥ ५ ॥

**तन्दह्यमानमनुमन्त्रयते प्रेहि प्रेहि पथिभिः पूर्व्येभिरिति समानम् ॥ ६ ॥**

तंग्रहणन्तं प्रति कर्मान्तरमप्यस्तीति ज्ञापनार्थम्। तेन प्रेषन्दत्त्वा सिन्नातादिलौकिकं कुर्यात् दह्यमानं प्रेतमनुमन्त्र-

यते । प्रेहि प्रेहि पथिभिः पूर्व्यैरिति समानं प्रागुक्तेनानुद्रव-णेन प्रेति प्रेहि पथिभिरिति पञ्चानां तृतीयमुद्धरेत् मैनमग्ने विदहो इति षट्, पूषा त्वेतश्च्यावयतु प्रविद्वानिति चतस्रः, उपसर्प चतस्रः, सोम एकेभ्य इति पञ्च, उरूणसावसु तृपेति चतुर्विंशति ऋचः अनुद्रवण उक्ताः अत्रापि तावतीभिरनुमन्त्र-यतेत्यर्थः ॥ ६ ॥

स एवंविदा दह्यमानः सहैव धूमेन स्वर्गं लोकमेतीति ह विज्ञायते ॥ ७ ॥

प्रशंसेयम् । सा च विदुषा कर्म कर्त्तव्यमिति ज्ञापयितुम् । न्यायविदश्च ज्ञात्वा चानुष्ठानमित्याहुः ॥ ७ ॥

उत्तरपुरस्तादाहवनीयस्य जानुमात्रङ्गर्त्तं खात्वा शीपालमित्यवधापयेत्ततो ह वा एष निष्क्रम्य सहैव धूमेन स्वर्गं लोकमेतीति ह विज्ञायते ॥ ८ ॥

जानुमात्रे गर्त्ते एतावत्कालमातिवाहिकं शरीरमास्था-याहिताग्निः संस्कारं प्रतीक्षते ततोऽस्मिल्लोके दग्धः सन् अव-टान्निष्क्रम्य धूमेन सह स्वर्गमेतीति श्रूयते ॥ ८ ॥

इमे जीवा वि मृतैरावत्रन्निति सव्यावृतो व्रजन्त्यनवेक्षमाणाः ॥ ९ ॥

अथ इममित्यृचं कर्त्ता जपित्वा ततः सर्वे सव्यावृतो भूत्वा गच्छेयुः पृष्ठतोऽनीक्षमाणाः ॥ ९ ॥

यत्रोदकमवहद्भवति तत्प्राप्य सकृदुन्मज्ज्यै-काञ्जलिमुत्सृज्य तस्य गोत्रं नाम च गृहीत्वो-

**क्षीर्थ्यान्यानि वासांसि परिधाय सकृदेनान्यापीड्योदग्दशानि विसृज्यासत आनक्षत्रदर्शनात्॥ १० ॥**

ततो यत्रोदकमवहत् स्थिरम्भवति तत् प्रतिगच्छन्ति। तत्प्राप्य सकृन्निमज्जन्ति सकृदवगाहन्त इत्यर्थः। तत एकाञ्जलिं उत्सृजन्ति समानोदकाः, सर्वे एकैकमञ्जलिमुत्सृजेयुरित्यर्थः। पुरुषाः स्त्रियश्च। तस्य गोत्रनाम गृहीत्वा प्रेतस्य गोत्रं नाम च गृहीत्वा काश्यपगोत्र देवदत्त एतत्ते उदकमित्येवमुक्त्वा सिञ्चन्ति दक्षिणामुखाः। अयुग्मा दक्षिणामुखा इति स्मृतेः। निनयनदेशस्तु स्मृतितोऽवगन्तव्यः। तत उदकादुत्तीर्य्यान्यानि वासांसि परिदध्युः। ततः सकृदार्द्राणि पीडयन्ति अभ्यासो न कार्य्यः। तत उदगग्राणि वासांसि विसृजन्ति शोषणार्थम्। ततस्तत्रैवासते आनक्षत्रदर्शनात्। ततो नक्षत्रेषु दृश्यमानेषु गृहं प्रविशेयुः सर्वेऽमात्याः॥ १० ॥

**आदित्यस्य वादृश्यमाने प्रविशेयुः॥ ११ ॥**

आदित्यस्य वा दृश्यमाने कस्मिंश्चिन्मण्डले रश्मिवर्जिते प्रविशेरन्। अस्मिन् पक्षे आमण्डलदर्शनादासते॥ ११ ॥

**कनिष्ठप्रथमा ज्येष्ठजघन्याः॥ १२ ॥**

प्रविशेयुः। उभयवचनमानुपूर्वीसिद्ध्यर्थम्॥ १२ ॥

**प्राप्यागारमश्मानमग्निं गोमयमक्षतांस्तैलमप उपस्पृशन्ति॥ १३ ॥**

गृहं प्राप्याश्मादीनुपस्पृशन्ति ततः प्रविशेरन्॥ १३ ॥

**नैतस्यां रात्र्यामन्नम्पचेरन्॥ १४ ॥**

एतस्यां रात्र्यां अन्नं न पचेरन्नमात्याः ॥ १४ ॥

क्रीतोत्पन्नेन वा वर्त्तेरन् ॥ १५ ॥

क्रीतेन वा उत्पन्नेन वा वर्त्तेरन्। केचिदेतत् सूत्रं न पठन्ति ॥ १५ ॥

त्रिरात्रमक्षारलवणाशिनः स्युः ॥ १६ ॥

सर्वेऽमात्याः ॥ १६ ॥

द्वादशरात्रं वा महागुरुषु दानाध्ययने वर्जयेरन् ॥ १७ ॥

मातापितरौ यश्चोपनीय कृत्स्नं वेदमध्यापयति एते महागुरवः। एतेषु मृतेषु द्वादशरात्रं वा दानाध्ययने वर्जयेरन्। दशाहं वेति वक्ष्यमाणेन सह विकल्पः। नात्राशौचं विधीयते। अपि तु दानाध्ययनवर्जनमात्रम्। अशौचन्तु स्मृत्यन्तरद्रष्टव्यन्दशाहं शावमाशौचमित्यादि ॥ १७ ॥

दशाहं सपिण्डेषु ॥ १८ ॥

मृतेषु दानाध्ययने वर्जयेरन्निति सर्वत्र सम्बन्धनीयम् ॥ १८ ॥

गुरौ चासपिण्डे ॥ १९ ॥

उपनीय कृत्स्नवेदाध्यापके गुरावसपिण्डेऽपि दशाहं द्वादशाहं वेति पूर्वेण सह विकल्पः। मातापित्रोस्तु सपिण्डत्वाद्दशाहं द्वादशाहं वा विकल्पः ॥ १९ ॥

अप्रत्तासु च स्त्रीषु ॥ २० ॥

दशाहमेव ॥ २० ॥

त्रिरात्रमितरेष्वाचार्य्येषु ॥ २१ ॥

एकदेशाध्यापकेष्वित्यर्थः ॥ २१ ॥

श्रोत्रे चासपिण्डे ॥ २२ ॥

त्रिरात्रमेव समानोदक इत्यर्थः।

सपिण्डता तु पुरुषे सप्तमे विनिवर्त्तते।
समानोदकभावस्तु जन्मनाम्नोरवेदने ॥ २२ ॥

प्रत्तासु च स्त्रीषु ॥ २३ ॥

त्रिरात्रमेव ॥ २३ ॥

अदन्तजाते ॥ २४ ॥

त्रिरात्रमेव ॥ २४ ॥

अपरिजाते च ॥ २५ ॥

अपरिजातो नाम असम्पूर्णो गर्भः तत्र च त्रिरात्रमेव ॥२५॥

एकाहं सब्रह्मचारिणि ॥ २६ ॥

सहाध्यायी सब्रह्मचारी तस्मिन् मृते एकाहं वर्जयेत् ॥ २६

समानग्रामीये च श्रोत्रिये ॥ २७ ॥

समानग्रामवासिनि च श्रोत्रिये मृते एकाहं वर्जयेत्। अनाशौचनिमित्तेषु गुर्वादिषु श्रोत्रियपर्य्यन्तेषु मृतेष्वध्ययन-मात्रं वर्जयितव्यं न दानमित्युपदेशः। अत्रान्ये व्याचख्युः त्रिरात्रमक्षारलवणाशिनः स्युः। महागुरुषु तु द्वादशरात्रं वा अक्षारलवणाशिनः स्युर्विकल्पः। दानाध्ययने वर्जयेरन्द-शाहं सपिण्डेषु इत्यनेन प्रकरणेनाशौचं विधीयते। आशौ-चादिसंक्षेपः। तेन स्मृतेराशौचविस्तारो विज्ञेय इति।

धर्मशास्त्रेषु दाहस्य विहिता चोदकक्रिया।
येषान्तेषान्तु सर्वेषां दाहकर्मेति साधितम् ॥

तत्र त्वनाहिताग्न्यादेर्विशेषो वक्ष्यतेऽधुना ।
द्विगुल्फं बर्हिराज्यञ्चेत्येवमन्तं समम्भवेत् ॥
नास्यानुस्तरणी कार्य्या पात्राणां योजनं तथा ॥
पृषदाज्यन्तथा चार्थादिति गृह्यविदां मतम् ॥
नानाहिताग्नेः पात्राचयो विद्यत इति बौधायनः ।
तान्दिशन्तु नयेदग्निं प्रेतञ्चापि ततः परम् ।
अयुजो मिथुना वृद्धाः पीठचक्रेण वा नयेत् ॥
प्रेतस्य पृष्ठतोऽमात्या ईयुः पूर्ववदेव च ।
भूमिभागन्ततः प्राप्य कर्त्ता प्रोक्षति पूर्ववत् ॥
गृह्येणाहिताग्निन्तु दहेत्पत्नीञ्च पूर्ववत् ।
कपालाग्निर्दहेदन्यमुपनीतं तथा परम् ॥
प्राक् तूपनयनात् प्रेतं लौकिकाग्निर्दहेन्नरम् ।
अग्निवर्णं कपालन्तु तस्मा तत्र विनिक्षिपेत् ॥
करीषादि ततो योऽग्नेर्जातः स तु कपालजः ।
उद्धतान्ते निधायोऽग्निर्दग्ध तूत्तरपश्चिमे ॥
तथा शाखान्तरे दृष्टेः प्रणीताः प्रणयेत्ततः ।
खाते हिरण्यशकलन्तिलांश्चापि विनिक्षिपेत् ॥
तन्त्रन्नेति पूर्वोक्तमिध्माचित्यादिपूर्ववत् ।
पत्नुत्थापनपर्य्यन्तं धनुरस्त्रमथापि वा ॥
ततो हिरण्यशकलैः छिद्राण्यपिदधाति वै ।
घृतसिक्तांस्तिलांश्चापि किरेत् प्रेतकलेवरे ॥
अथेममग्ने चमसं पूर्णपात्रानुमन्त्रणम् ।
सव्यं जानु निपात्याथ चतस्रोऽग्नौ जुहोति वै ॥
तथाभूतस्य जुहुयात्पञ्चमीं हृदये ततः ।
सिग्वातादि ततः कुर्य्यात्ततोऽर्थं प्राप्तसञ्चितम् ॥
ततः प्रज्वालयेदग्निं प्रैषो नात्र भवेदिति ॥

तं दह्यमानमित्यादि सर्वं पूर्ववदेव तु ॥
अस्थिसञ्चयनादेस्तु सर्वसाम्यान्न कथ्यते ॥ २७ ॥

इति चतुर्थे चतुर्थी कण्डिका ॥

---

अथ पञ्चमी कण्डिका ॥

**सञ्चयनमूर्ध्वं दशम्याः कृष्णपक्षस्यायुजा-स्वेकनक्षत्रे ॥ १ ॥**

सञ्चीयन्तेऽस्थीनि येन कर्मणा तत्सञ्चयनम्। कृष्णपक्षस्य दशम्या ऊर्ध्वमयुजासु तिथिषु एकादशी त्रयोदशी पञ्चदशी-त्यासु। एकनक्षत्रे येन नाम्ना एकमेव नक्षत्रमभिधीयते तन्ना-मके नक्षत्र इत्यर्थः। आषाढाद्वयं फल्गुनीद्वयं प्रोष्ठपदाद्वय-मिति षड्भ्योऽन्यत्र नक्षत्रे कर्त्तव्यमित्यर्थः। अन्तर्दशाहे अतीते वा। दशाहे कृष्णपक्षागमनमात्र इदङ्कार्य्यं नातीत एव दशाह इति नियमः। अतीते दशाह इत्ययं पक्षः संवत्सरे सपिण्डीकरणपक्षे एवोपपद्यते द्वादशाहे सपिण्डीकरणपक्षे तु नोपपद्यते सपिण्डीकृतस्य प्रेतस्य पृथक्पिण्डे नियोजनस्य प्रतिषेधात्। यः सपिण्डीकृतं प्रेतं पृथक्पिण्डे नियोजयेत्। विधिघ्नस्तेन भवति पितृहा चोपजायत इति शातातपः। सांवत्सरिकोद्दिष्टं विधीयते श्राद्धमस्मै दद्युरिति। तस्मात्तस्मिन् पक्षे द्वितीयेऽहनि चतुर्थेऽहनीत्यादिकालो द्रष्टव्यः ॥ १ ॥

**अलक्षणे कुम्भे पुमांसमलक्षणायां स्त्रिय-मयुजोऽमिथुनाः प्रवयसः ॥ २ ॥**

अमङ्गले कुम्भे पुमांसं सञ्चिनुयुः। स्तनरहितः कुम्भः।

अलक्षणायां कुम्भ्यां स्त्रियं सञ्चिनुयुः। स्तनवती कुम्भी। अयुज इत्यादि पूर्ववत् ॥ २ ॥

**क्षीरोदकेन शमीशाखया त्रिःप्रसव्यमायतनं परिव्रजन् प्रोक्षति शीतिके शीतिकावतीति ॥ ३ ॥**

क्षीरमिश्रोदकेन कर्त्ता प्रोक्षति मन्त्रावृत्तिरुक्ता। शेषं व्याख्यातम् ॥ ३ ॥

**अङ्गुष्ठोपकनिष्ठिकाभ्यामेकैकमस्थ्यसंह्लादयन्तोऽवदध्युः पादौ पूर्वं शिर उत्तरम् ॥ ४ ॥**

कर्त्ता प्रोक्षति सञ्चेतारोऽङ्गुष्ठोपकनिष्ठिकाभ्यामेकैकमस्थि गृहीत्वाऽसंह्लादयन्तः शब्दो यथा न स्यात्तथा कुम्भेऽवदध्युः। पादौ पूर्वमवदध्युः शिर उत्तरमवदध्युः। उभयवचनमानुपूर्वीसिद्ध्यर्थम् ॥ ४ ॥

**सुसञ्चितं सञ्चित्य पवनेन सम्पूय यत्र सर्वत आपो नाभिः स्यन्देरन्नन्या वर्षाभ्यस्तत्र गर्त्तेऽवदध्युरुपसर्प मातरं भूमिमेतामिति ॥५॥**

शिरःपर्यन्तं कुम्भेऽवधाय ततो भस्म शूर्पेण संशोध्य सूक्ष्माण्यस्थीनि शिरस उपरि सञ्चित्य ततोऽभित आकाशम् इत्यादिलक्षणयुक्ते देशे गर्त्तं खात्वा यत्र गर्त्ते सर्वतोऽपि दिग्भ्योऽधस्तिर्यक् चापो न निष्यन्देरन् वर्षाभ्योऽन्यास्तस्मिन् गर्त्ते कुम्भमवदध्युः उपेत्यृचा मन्त्रं कर्त्ता ब्रूयात्। उत्तरांश्च मन्त्रान् कर्त्तैव ब्रूयात् ॥ ५ ॥

**उत्तरया पांसूनवकिरेत् ॥ ६ ॥**

अश्वं स्वेत्येतया पांसून् प्रक्षिपेत् अवटे। यथा कुम्भम् आननपर्य्यन्तं निमग्नो भवति ॥ ६ ॥

**अवकीर्य्योत्तराम् ॥ ७ ॥**

अवकीर्णे गर्त्ते कुम्भाननपर्य्यन्ते तत ऊर्ध्वंश्व मा नेत्येतां जपेत्। अवकीर्य्यवचनं पांसुप्रक्षेपो न धर्ममात्रं कार्य्योऽपि तु कुम्भाननपर्य्यन्तं गर्त्तपूरणायालं कर्त्तव्य इत्येवमर्थम् ॥७॥

**उत्तरे स्तम्भामीति कपालेनापिधायाथानवेक्षं प्रत्याव्रज्याप उपस्पृश्य श्राद्धमस्मै दद्युः ॥८॥**

तत उत्तर इत्यृचा घटादिकपालेन कुम्भमपिधाय ततो गर्त्तस्यार्थप्राप्तं पूरणङ्करोति यथा कुम्भो न दृश्यते। कर्मान्तरास्तित्वज्ञापनार्थादथशब्दादयमर्थो लब्धः। ततो न वेक्षं पृष्ठतो नोत्तमाणः प्रत्याव्रजन्ति। ततोऽप उपस्पृश्य स्नात्वेत्यर्थः। ततोऽस्मिन्नहनि श्राद्धम् अस्मै प्रेताय केवलाय दद्युरेकोद्दिष्टविधानेन ॥ ८ ॥

इति चतुर्थे पञ्चमी कण्डिका ॥

---

अथ षष्ठी कण्डिका।

**गुरुणाभिमृता अन्यतो वाऽपचीयमाणा अमावास्यायां शान्तिकर्म कुर्वीरन् ॥ १ ॥**

गुरुणा अभिमृताः गुरुर्येषां मृतः अन्यतो वा पुत्रपशुहिरण्यादिभिरपचीयमाणाः सन्तोऽमावास्यायां शान्तिकर्मनाम कुर्य्युः। तत्र मन्त्रवतीं क्रियां ज्येष्ठः करोति इतरे तूपासते ॥ १ ॥

**पुरोदयादग्निं सहभस्मानं सहायतनं द-**

क्षिणा हरेयुः क्रव्यादमग्निं प्रहिणोमि दूरमित्यर्द्धर्चेन ॥ २ ॥

प्रागादित्योदयादग्निं सहभस्मानमायतनेन सह दक्षिणस्यां दिशि हरेयुः दक्षिणां दिशं प्रति नयेयुरित्यर्थः। क्रव्यादमग्निमित्यर्धर्चेन पचनाग्नेरेवायमुत्सर्गः। गृह्यस्येत्यभ्युपगम्यमानेतिप्रसङ्गः। त्रेताग्नीनामपि प्रसज्येत। अथ तेषां यावज्जीवं धार्य्यत्वादुत्सर्गो नोपपद्यते। तदत्रापि समानम्। औपासनोऽपि यावज्जीवं धार्य्य एव पाणिग्रहणादिगृह्यं परिचरेदिति वचनात्। तस्मात्पचनस्येति सिद्धम्। आयतनशब्देन अधिश्रयणार्था मेखलादय उच्यन्ते ॥ २ ॥

तं चतुष्पथे न्युप्य यत्र वा त्रिः प्रसव्यं परियन्ति सव्यैः पाणिभिः सव्यानूरूनाघ्नानाः ॥ ३ ॥

अथ तमग्निं चतुष्पथे प्रक्षिप्य यत्र वा अदक्षिणस्यां वा अचतुष्पथे वा न्युप्य अथ तमग्निमप्रदक्षिणन्त्रिः परियन्ति सव्यैः पाणिभिः सव्यानूरूनाघ्नाना ताडयमानाः ॥ ३ ॥

अथानवेक्षं प्रत्याव्रज्याप उपस्पृश्य केशश्मश्रुलोमनखानि वापयित्वोपकल्पयीरन्नवान्मणिकान् कुम्भानाचमनीयांश्च शमीसुमनोमालिनः शमीमयमिध्मं शमीमय्यावरणी परिधींश्चानडुहङ्गोमयञ्चर्म च नवनीतमश्मानं च यावत्यो युवतयस्तावन्ति कुशपिञ्जूलानि ॥ ४ ॥

अथानवेक्षं पृष्ठतोऽनीक्षमाणाः प्रत्याव्रजन्ति। अथशब्द ऊर्वाहननस्य प्रत्याव्रजनाङ्गत्वाशङ्कानिवृत्त्यर्थः। ततः सर्वे स्नान्ति। ततः सर्वे केशादीन् वापयन्ति। पुनरपि स्मृतिप्राप्तं स्नानङ्कुर्युः। ततो वक्ष्यमाणान्युपकल्पयीरन्। शब्लोपश्छान्दसः। उपकल्पनविधानात् पुराणानामुत्सर्गः। अनुक्तोपयोगानां यथार्थमुपयोगः कार्य्यः। मणिको नाम जलधारणार्थो भाण्डविशेषः। कुम्भा उक्ताः। आचमनीया नाम आचमनसाधना उदञ्चनकमण्डलुप्रभृतयः। शमीसुमनोमालिनः शमीपुष्पमालिनः। मणिकादीन् स्त्रीत्ववानुपकल्पयेयुः। शमीसुमनोमालिन इति मणिकादेर्विशेषणमित्येके। कर्तॄणां विशेषणमित्यन्ये। शमीमयमिध्ममुपकल्पयेयुः। प्राकृतस्यायं विकारः। शमीमय्यावरणी चोपकल्पयेत्। अरणी इत्येतावत्युच्यमाने एकेन वाक्येन द्रव्यचोदना गुणचोदना च विधातुन्न शक्यत इति कृत्वा शमीमयग्रहणं नैवाधिक्रियते। अरणी ह्यपूर्वा विधीयते। अतः पुनः शमीमयग्रहणं कृतं परिधींश्चोपकल्पयेरन्। किमर्थमिदमिति न विद्मः। द्रव्यचोदना तावन्न कार्य्या। इध्माबर्हिषोश्च सन्नहनमिति स्थालीपाके इध्मसन्नहनस्य दर्शपूर्णमासातिदेशोऽस्ति। इतरेषाञ्च स्थालीपाकातिदेशोऽस्ति। पाकयज्ञानामेतत्तन्त्रमिति दर्शपूर्णमासयोश्च परिधयो विहिताः। एकविंशतिमिध्मदारूणि भवन्तीति मन्त्रलिङ्गाच्च। एकविंशतिधासम्भरामीति। अथ परिधीन् परिदधाति रक्षसामपहत्यै इत्यर्थवादाच्च। तस्मादतिदेशादेव सिध्येयुः। शमीमयत्वसिद्ध्यर्थमिति चेत्। तदपि न। इध्मस्तावच्छमीमयोऽत्र विहितः। दर्शपूर्णमासयोश्चेध्मपरिधीनामेकद्रव्यत्वं दृष्टम्। पालाशः खादिरो वेध्म इति बौधायनः। तत्र चेध्मग्रहणेनैकविंशतेर्ग्रहणमेकविंशतिमिध्मदारूणीति वि-

धिवाक्ये श्रवणात्। वृत्त्यान्तरानुक्तेश्च। अत्र चेध्मग्रहणेन परिधिग्रहणे सति परिधयोऽपि शमीमया एव भवन्ति। इध्मसंख्या चावश्यमतिदेष्टव्यैव। इतरथा सन्नहनमात्रातिदेशेन अरत्निमात्रत्वपालाशत्वादयोऽपि गुणा न स्युरिध्मस्ते च। तर्हि सर्वासामभ्याधानं प्राप्नोतीति शङ्का न कार्य्या। पञ्चदशेध्मदारूण्यभ्यादधातीति श्रुतेः। इतरेषां च त्रेतावद्विनियोगः कार्य्यः। तत्र केचित्परिहरन्ति। गुणचोदनैवेयं सा च ज्ञापनार्थम्। अन्यत्रेध्मपरिधीनामनानावृत्त्वं कार्य्यमिति। रक्षोहननार्थश्चावश्यं परिधातव्या एवेति। चशब्दः शमीमयत्वसमुच्चयार्थः। उपकल्पनसमुच्चयार्थत्वे सति सर्वत्र चशब्दं कुर्य्यात्। एवन्ते परिहृतवन्तः। तदयुक्तमित्यन्ये। अस्मच्छास्त्रे इध्मग्रहणेन पञ्चदशदारुकस्य ग्रहणं दृष्टम्। प्राचीनावीतीध्ममुपसमाधाय इध्ममभिधार्य्येति च एकविंशतिवादिनाप्युभयत्र पञ्चदशमभ्युपगम्यत एव। तत्र स्वशास्त्रदर्शनसामान्यादिध्माबर्हिषोश्च सन्नहनमित्यत्रापि पञ्चदशदारुकस्यैव ग्रहणम्। पञ्चदशदारुकस्य सतः सन्नहनाद्यतिदेशेन प्राप्यते। यथा शस्त्रेष्वेव होत्रकाणामभिहिङ्कार इत्यत्र शास्त्रान्तरे होत्रकशब्दस्य सप्तसु त्रिषु वा दृष्टत्वेऽपि अस्मच्छास्त्रे मुख्यवर्जितेषु दृष्ट इति कृत्वा द्वादशापि गृह्यन्ते। स्वशास्त्रदर्शनसामान्यादेवमिहापि स्वशास्त्रदर्शनसामान्यात्पञ्चदशदारुकस्य ग्रहणम्। एवञ्च कृत्वा प्रकृतौ पार्वणे परिधयो नैव सम्भवन्ति। तदतिदेशादितरेष्वपि पाकयज्ञेषु नैव सम्भवन्ति। प्रकृतौ परिध्यादीनामाचार्य्येण विनियोगानुक्तेश्च पञ्चदशदारुकस्यैव ग्रहणम्। अथोच्यते। एकविंशतिधा सम्भरामीति सन्नहनमन्त्रे संख्या श्रूयते। मन्त्रस्यातिदेशात्पाकयज्ञेष्वपि भवति। पञ्चदशकाष्ठत्वे लिङ्गानुपपत्तिः। न चोहः कर्त्तुं शक्यः। न प्रकृतावूहो

विद्यत इति न्यायादिति। तदयुक्तम्। नह्यस्य मन्त्रस्य स्थालीपाकः प्रकृतिः किन्तर्हि दर्शपूर्णमासौ तस्मादत्राप्यौह एव कार्य्यः। अन्ये तु मन्त्रं नैवेच्छन्ति। अपि चेध्मपरिधीनां नानावृक्षत्वमपि दर्शपूर्णमासयोर्भगवतापस्तम्बेनोक्तम्। यत्तूक्तं रक्षोहननार्थं परिधातव्या इति तदप्ययुक्तं पूर्णपात्रेणैव रक्षोहननस्य कृतत्वात्। न चात्र प्रणयनस्य हविःश्रपणार्थमुपपद्यते। आज्यहोमत्वेऽपि दहनकर्मणि प्रणयनदर्शनात्। अपः प्रणयति आपो वै रक्षोघ्नी रक्षसामपहत्यै इति श्रुतेः रक्षोहननार्थत्वं यदुपादीयते तच्चेत् कार्य्यमन्येन कृतं किमिति तदुपादीयते रक्षोहननञ्च परिधिकार्य्यं पूर्णपात्रेणैव कृतमिति न परिधय उपादेयाः। अतः सर्वत्र पञ्चदशदारुक एवेध्म इति सिद्धम्। अनेनैव चाभिप्रायेणाचार्य्योऽपि पार्वणे परिध्यादीनां विनियोगमनुक्तवान्। बह्वृचानां समाचारश्च सर्वत्रैवमेव। पारम्पर्य्योपदेशश्चैवमेव। अनेन तु वचनेन परिधयः अपूर्वाः सगुणा वि[illegible]यन्ते। तेनात्राप्यूर्ध्वसमिधौ अनुयाजसमिच्च न कार्य्या विध्यभावात्। नन्वतिदेशप्राप्तेन पूर्णपात्रेणैव अत्र रक्षोहननस्य कृतत्वात् परिधिविधानन्नोपपद्यते इत्याशङ्का न कार्य्या। नह्यत्र परिधिविधानस्यानेनैव कार्य्येण भाव्यमित्यत्र किञ्चन प्रमाणमस्ति। विधिभेदात्तस्य कार्य्यस्येहान्येन कृतत्वाच्च कार्य्यान्तरं कल्पनीयमित्यलमतिविस्तरेण। आनडुहञ्चर्मयं चर्म चोपकल्पयेयुः। नवनीतञ्च अश्मानञ्च यावत्यो युवतयः स्युस्तावन्ति कुशपिञ्जूलानि चोपकल्पयेयुः ॥ ४ ॥

अग्निवेलायामग्निं जनयेदिहैवायमितरो जातवेदा इत्यर्धर्चेन ॥ ५ ॥

अथाग्निहोत्रविहरणकाले अपराह्णे शमीमयीभ्यामरणीभ्यामग्निं मन्थयेत् अर्धर्चेन । अयञ्चाग्निः पचनो भवति ॥ ५ ॥

तमन्दीपयमाना आसत आशान्तरात्राद्दायुष्मतां कथाः कीर्त्तयन्तो माङ्गल्यानीतिहासपुराणानीत्याख्यापयमानाः ॥ ६ ॥

तंग्रहणं मन्त्रस्योत्तराङ्गत्वाशङ्कानिवृत्त्यर्थम् । आयुष्मताङ्कुलवृद्धानामन्येषाञ्च कथाः कीर्त्तयन्त इतिहासादीनि माङ्गल्यानि ब्रुवन्तः मथितमग्निन्दीपयमानाः गृहाद्बहिरेवासते आशान्तरात्रान्निशि यस्मिन् काले तूष्णीमासते जनास्तच्छान्तरात्रम् ॥ ६ ॥

उपरतेषु शब्देषु सम्प्रविष्टेषु वा गृहन्निवेशनं वा दक्षिणाद्द्वारपक्षात् प्रक्रम्याविच्छिन्नामुदकधारां हरेत्तन्तुन्तन्वन्रजसो भानुमन्विहीत्योत्तरस्मात् ॥ ७ ॥

ततो यदा न शब्दाः क्वचिदुच्चरन्ति तदा । उत्तरविवक्षार्थमनुवादोऽयम् । सम्प्रविष्टेषु वा अमात्येषु गृहन्निवेशनं वा । किमुक्तं भवति । शान्तरात्रात्प्रागपि यद्यमात्या गृहन्निवेशनं वा प्रवेष्टुं कामयन्ते तदा तेषु प्रविष्टेषु । एवं शान्तरात्रेण सह विकल्पः । निवेशनशब्देनात्र संवेशनमुच्यते । शयनस्थानमित्यर्थः । उपसर्गव्यत्ययो द्रष्टव्यः । उक्तञ्च नैरुक्तैः । निरित्येष समित्येतस्य स्थान इति । तद्वदत्रापि । अनयोरन्यतरे काले कर्त्ता दक्षिणात् द्वारपक्षादारभ्य आ उत्तरस्माद्द्वारपक्षात्सन्ततामुदकधारां सिञ्चेत् । तन्तुमित्यृचा ॥ ७ ॥

अथाग्निमुपसमाधाय पश्चादस्यानडुहञ्चर्मास्तीर्य्य प्राग्ग्रीवमुत्तरलोमः तस्मिन्नमात्यानारोहयेदारोहतायुर्जरसं वृणाना इति ॥ ८ ॥

अथशब्दोऽस्मिन् कालेऽग्न्यन्तरमौपासनमुपसमादध्यादिति ज्ञापनार्थम्। ततः पश्चादस्यानडुहं चर्मास्तीर्य्येत्यादि व्याख्यातम्। ततश्चर्मण्यमात्यानारोहयेदारोहतेत्यृचा। कर्त्तृवर्ज्जं श्राद्धाः सर्वे पुमांसः स्त्रियश्चामात्या इत्युच्यन्ते ॥ ८ ॥

इमं जीवेभ्यः परिधिं दधामीति परिधिं परिदध्यात् ॥ ९ ॥

आज्यसंस्कारान्तं कृत्वा इममित्यृचाग्नेः पश्चात्परिधिं परिदध्यात्। ततो दक्षिणतस्तूष्णीन्तत उत्तरतस्तूष्णीमेव। परिधिमित्येकवचनादाद्यस्यैव समन्त्रकत्वमितरौ तूष्णीम् ॥९॥

अन्तर्मृत्युन्दधतां पर्वतेनेत्यश्मानमित्युत्तरतोऽग्नेः कृत्वा परं मृत्यो अनुपरे हि पन्थामिति चतसृभिः प्रत्यृचं हुत्वा यथाहान्यनुपूर्वं भवन्तीत्यमात्यानीक्षेत ॥ १० ॥

अथ अन्तर्मृत्युमिति पादेन अश्मानमुत्तरतोऽग्नेर्निदधाति ऋचं पादग्रहणे इत्यत्र पादशब्दो मूलवाची। यथा पादः पदिति। तेनात्र पादमात्रस्य ग्रहणं न ऋचः। तत आज्यभागान्तं कृत्वा परं मृत्यो इति चतसृभिः प्रत्यृचं व्याख्यातम्। तथा हुत्वा यथेत्यृचामात्यानीक्षेत ॥ १० ॥

युवतयः पृथक् पाणिभ्यां दर्भतरुणकैर्नव-

नीतेनाङ्गुष्ठोपकनिष्ठिकाभ्यामक्षिणी आज्यपराच्योविसृजेयुः ॥ ११ ॥

अमात्येषु या युवतयः स्त्रियः ता दर्भतरुणकैर्नवनीतं गृहीत्वा तेनाङ्गुष्ठोपकनिष्ठिकाभ्यां पाणिभ्यां अक्षिणी अञ्जते। पृथक्पाणिभ्यामिति वचनं पृथक् पृथक् युगपदेवाञ्जीरन्। न पर्य्यायेणेत्येवमर्थम्। तेन द्वित्वं कुशपिञ्जूलानां नास्त्येव। ततोऽनवेक्षमाणाः पृष्ठतो विसृजेयुः कुशपिञ्जूलानि ॥ ११ ॥

इमा नारीरविधवाः सुपत्नीरित्यञ्जाना ईक्षेत ॥ १२ ॥

इमा इत्यृचा कर्त्ता अञ्जाना युवतीरीक्षेत ॥ १२ ॥

अश्मन्वतीरीयते संरभध्वमित्यश्मानङ्कर्त्ता प्रथमोऽभिमृशेत् ॥ १३ ॥

तत एतयाश्मानं कर्त्ता पूर्वमभिमृशेत्। प्रथमवचनात्पश्चादितरेऽभिमृशेत् तूष्णीम् ॥ १३ ॥

अथापराजितायान्दिश्यवस्थायाग्निनानडुहेन गोमयेन चाविच्छिन्नया चोदकधारयापोहिष्ठा मयोभुव इति तृचेन परीमेगामनेषतेति परिक्रामत्सु जपेत् ॥ १४ ॥

अग्निनानडुहेन गोमयेन चाविच्छिन्नया चोदकधारयापोहिष्ठेति तृचेन सिच्यमानयाऽमात्येषु औपासनाग्निं परियत्सु तस्मिन् काले अपराजितायां दिशि स्थित्वा कर्त्ता परीम इत्यृचं जपेत् ॥ १४ ॥

पिङ्गलोऽनड्वान् परिणेयः स्यादित्युदाहरन्ति ॥ १५ ॥

एवं गुणयुक्तोऽनड्वान् परिणेतव्यः। अथ स्विष्टकृदादि समापयेत्। उत्तरत्राथशब्दात् ॥ १५ ॥

अथोपविशन्ति यत्राभिरंस्यमाना भवन्त्यहतेन वाससा प्रच्छाद्य ॥ १६ ॥

अथोपविशन्ति यत्राभिरंस्यमाना भवन्ति यो देशोऽभीष्टस्तत्राहतेन वाससा प्रच्छाद्योपविशन्ति ॥ १६ ॥

आसतेऽस्वपन्त ओदयात् ॥ १७ ॥

तत्रैव आ उदयादस्वपन्त आसते ॥ १७ ॥

उदित आदित्ये सौर्य्याणि स्वस्त्ययनानि च जपित्वाऽन्नं संस्कृत्याऽपनः शोशुचदघमिति प्रत्यृचं हुत्वा ब्राह्मणान् भोजयित्वा स्वस्त्ययनं वाचयीत गौः कंसोऽहतं वासश्च दक्षिणा ॥१८॥

ततः उदित आदित्ये सौर्य्याणि स्वस्त्ययनानि च व्याख्यातानि जपित्वा अन्नं संस्कृत्येति वचनमाज्यभागान्तं कृत्वा तत एवान्नात् अपनः शोशुचदघमिति होमः कार्य्य इत्येवमर्थम्। प्रत्यृचं व्याख्यातम्। तथा हुत्वा। अन्नस्य तु धानावत्संस्कारः। ततो होमशेषं समाप्य तत एवान्नात् ब्राह्मणान् भोजयित्वा स्वस्त्ययनं वाचयीत। ततो गौः कंसोऽहतं वास इति त्रीणि भुक्तवद्भ्यो दक्षिणां दद्यात्। ओदयादित्येव सिद्धे उदित आदित्य इति वचनमध्यापनकालेऽपि सौर्य्याणि दिवैवाध्येतव्यानि। न कदाचिद्रात्रौ कर्त्तव्यानीत्येवमर्थम्। तेन

प्रत्यवरोहणे चेत् स्वपन्तमभ्युदयाच्चेदित्यत्र चापरेद्युरुदिते जप इति सिद्धम् ॥ १८ ॥

इति चतुर्थे षष्ठी कण्डिका ॥

---

अथ सप्तमी कण्डिका ॥

अथातः पार्वणे श्राद्धे काम्य आभ्युदयिक एकोद्दिष्टे वा ॥ १ ॥

अथशब्दोऽधिकारार्थः । इत उत्तरं वक्ष्यमाणो विधिः श्राद्धे वेदितव्य इति । अतःशब्दो हेत्वर्थः । यस्माच्छ्राद्धान्निःश्रेयसप्राप्तिः मूढैरपि च क्रियते तस्माद्वक्ष्याम इति । पार्वणमिति श्राद्धनाम । अन्वर्थसंज्ञा चेयं पर्वणि भवं पार्वणमिति । तथाप्येकस्मिन्नेव पर्वणि भवति । अमावास्यायाम् । नोभयोः पर्वणोः । कुतः । पिण्डपितृयज्ञेन सह व्यतिषङ्गदर्शनात् । स्मृतेश्च । विप्रश्चन्द्रक्षयेऽग्निमानिति मनुः । अमावास्यायां पितृभ्य इति गौतमः । पितॄनुद्दिश्य यद्दीयते ब्राह्मणेभ्यः श्रद्धया तच्छ्राद्धम् । काम्यं श्राद्धं पञ्चम्यां पुत्रकामस्येत्यादि । वृद्धिपूर्त्तनिमित्तमाभ्युदयिकम् । एकमेवोद्दिश्य यच्छ्राद्धं श्राद्धमस्मै दद्युः । एकादशाहे एकोद्दिष्टमित्यादि तदेकोद्दिष्टम् । धर्मभेदात् पृथगुपदेशः । श्राद्ध इत्येतावतैव सिद्धे पार्वणादिग्रहणं धर्मभेदप्रदर्शनार्थं कर्त्तव्यताविध्यर्थञ्च । धर्मभेदमुपरिष्टाद्वक्ष्यामः ॥ १ ॥

ब्राह्मणान् श्रुतशीलवृत्तसम्पन्नानेकेन वा काले ज्ञापितान् स्नातान् कृतपच्छौचानाचान्तानुदङ्मुखान् पितृवदुपवेश्यैकैकमेकैकस्य

**द्वौ द्वौ त्रींस्त्रीन् वा दृष्टौ फलभूयस्त्वं न त्वेवैकं सर्वेषाम् ॥ २ ॥**

ब्राह्मणग्रहणं क्षत्रियवैश्यादिनिवृत्त्यर्थम्। श्रुतं स्वाध्यायः शीलं स्वभावः शमदमादियुक्तत्वं क्रोधरागादिवर्जितत्वं च। वृत्तं विहितकरणं निषिद्धवर्जनं च। एतैस्त्रिभिर्गुणैर्युक्तानेकेन वा गुणेन युक्तानुपवेश्येत्यनेन सम्बन्धः। काले ज्ञापितान् स्मृत्युक्तनिमन्त्रणकाले निमन्त्रितानित्यर्थः। उक्तं च मनुना।

पूर्वेद्युरपरेद्युर्वा श्राद्धकर्मण्युपस्थिते।

निमन्त्रयीत त्र्यवरान् सम्यग्विप्रान् यथोदितानिति॥ तेषाञ्चैते नियमा भवन्ति।

निमन्त्रितो द्विजः पित्र्ये नियतात्मा भवेत्सदा।

न च छन्दांस्यधीयीत यस्य श्राद्धञ्च तद्भवेत्॥

इति मनुः। स्नातानिति वचनं नियमेन स्नातान् भोजयेत्। केनचित्कारणेन स्नानाशक्तोऽन्नं भोजयेदित्येवमर्थम्। अन्ये स्नातानिति समावृत्तानिति व्याचख्युः। अन्ये स्नानद्रव्यैः स्नातानिति तच्च स्नानं स्वेन द्रव्येण कारयितव्यमिति व्याचख्युः। प्रक्षाल्य पादौ पाणी चेत्याचमनाङ्गत्वेन विहितं पच्छौचं शुद्धपादस्यानित्यमिति ज्ञापनार्थं कृतपच्छौचवचनम्। तेन शुद्धपादत्वेऽप्यत्र नियमेन पच्छौचं कार्य्यमित्यर्थः। अन्ये तु स्वयमेव तेषां पादान् प्रक्षालयेदित्येवमर्थमिति व्याचख्युः। आचान्तानिति कर्माङ्गमाचमनं विधीयते। तेन भोजनाङ्गं श्राद्धाङ्गञ्च द्विराचमेयुः। एवं गुणविशिष्टानुदङ्मुखान् पितॄनुपवेशयेत्। उदङ्मुखवचनं प्राङ्मुखत्वनिवृत्त्यर्थम्। पितृवदिति वचनं ममैते पितर इत्येवं मनसा ध्यायन् उपवेशयेदित्येवमर्थं इत्येके। अन्ये तु पितुरेकं पितामहाय द्वा-

तरं प्रपितामहाय इत्येतममित्येवं यथात्रय उपवेशनार्थमिति एकैकस्यैकैकमुपवेशयेत्। द्वौ द्वौ त्रींस्त्रीन्वा अतोऽपि ब्राह्मणा अधिका भवेयुः। सर्वथा ब्राह्मणाधिक्ये फलाधिक्यमस्त्येव। सर्वथाऽल्पकर्मणो महाकर्मणश्च क्वचिदपि समानफलताशङ्का न कार्य्या। महाकर्मविधानानर्थक्यप्रसङ्गात्। न त्वेकं सर्वेषां त्रयाणां भोजयेत्।

द्वौ दैवे पितृकृत्ये त्रीनेकैकमुभयत्र वा।
भोजयेत् सुसमृद्धोऽपि न प्रसज्येत विस्तरे॥

इति मनुनोक्तस्य एकैकमुभयत्र वेत्यस्य पक्षस्यायं प्रतिषेधः। अस्य प्रतिषेधं कुर्वता मनूक्तमन्यदनुज्ञातं भवति। तेनैतत् सिद्धं भवति। दैवमपि भोजनमत्र कार्य्यम्। तस्य विधिः स्मृतितोऽवगन्तव्यः। आचार्य्येण तु पित्र्यस्यैव विधिरुच्यते। अस्मद्गृह्योक्तेति कर्त्तव्यतामात्रमेव कार्य्यम्। न शास्त्रान्तरं दृष्ट्वा विस्तरः कार्य्यः। मनुरपि।

सत्क्रियां देशकालौ च शौचं ब्राह्मणसम्पदम्।
पञ्चैतान्विस्तरो हन्ति तस्मान्नेहेत विस्तरम्॥
बह्वल्पं वा स्वगृह्योक्तं यस्य कर्म प्रकीर्त्तितम्।
तस्य तावति शास्त्रार्थे कृते सर्वः कृतो भवेत्॥

इति गृह्यविदः।

ये स्तेनपतितक्लीवा ये च नास्तिकवृत्तयः।

इत्याद्याश्च वर्ज्या इति॥२॥

## काममनाद्ये॥३॥

आद्यं सपिण्डीकरणम्। प्रेतमुद्दिश्य क्रियमाणश्राद्धमध्ये तदेव हि प्रथमम्। तद्वर्जितेषु श्राद्धेषु काममन्त्रयाणामेकं भोजयेत्। सपिण्डीकरणे तु नियमेन त्रयाणां त्रिभिर्भाव्यम्।

काममिति वचनमापत्कल्पोऽयमिति ज्ञापनार्थम्। अन्ये त्व-
नाद्ये पार्वणवर्जित इति व्याचख्युः। तद्यत्र प्रथमन्निर्दिष्टम्।
अन्ये त्वनाद्ये अभोजने आमहिरण्ये श्राद्धादाविति। आमैर्वा
फलमूलैर्वा प्रदानमात्रं हिरण्येन वा प्रदानमात्रं इति बौधा-
यनः। अन्ये त्वनाद्ये दुर्भिक्ष इति। अन्ये त्वनाद्ये आद्या-
भावे अन्नाभावे सम्पदभाव इति ॥ ३ ॥

पिण्डैर्व्याख्यातम् ॥ ४ ॥

जीवन्मृतानां पिण्डनिपरणमधिकृत्य ये पक्षाः पिण्डपितृ-
यज्ञे उक्तास्ते श्राद्धेऽपि विज्ञेयाः ॥ ४ ॥

अपः प्रदाय ॥ ५ ॥

उपवेशनादनन्तरं ब्राह्मणपाणिष्वपो ददाति। आग्नेयी-
मुखः प्राचीनावीती पितृकर्म कुर्यात् ॥ ५ ॥

दर्भान् द्विगुणभुग्नानासनं प्रदाय ॥ ६ ॥

ततो दर्भान् द्विगुणभुग्नानासनेषु ददाति। आसनं प्रदा-
येति सप्तम्यर्थे द्वितीया। आवेशनस्य प्राक् चोदितत्वात्
॥ ६ ॥

अपः प्रदाय ॥ ७ ॥

ततः पुनरपो ददाति ॥ ७ ॥

तैजसाश्ममयमृण्मयेषु त्रिषु पात्रेष्वेकद्रव्येषु
वा दर्भान्तर्हितेष्वपः आसिच्य शन्नो देवीरभि-
ष्टय इत्यनुमन्त्रितासु तिलानावपति तिलोऽसि
सोमदेवत्यो गोसवे देवनिर्मितः। प्रत्नवद्भिः

**प्रत्तः स्वधया पितॄनिमाँल्लोकान् प्रीणयाहि नः स्वधा नम इति ॥ ८ ॥**

ततस्तैजसमेकं पात्रं अश्ममयमेकं मृण्मयमेकं एतेषु त्रिषु पात्रेषु। त्रिद्रव्यासम्भवे एकद्रव्येषु वा त्रिषु पात्रेषु। त्रीण्यपि तैजसानि वा त्रीण्यप्यश्ममयानि वा त्रीण्यपि मृण्मयानि वा तान्याग्नेयौदिक्संस्थानि निधाय तेषु दर्भानन्तर्धाय ततस्तेष्वपो निषिच्य ततः शन्नो देवीरित्यृचा पात्रत्रयस्था आपोऽनुमन्त्रयेत्। सकृदेव शक्यत्वान्मन्त्रावृत्तिः। ततस्त्रिषु पात्रेषु तिलानावपति तिलोऽसीति मन्त्रेण प्रतिपात्रं मन्त्रावृत्तिः। पितृशब्दस्योहो नास्तीत्युक्तं प्राक्। ततः पात्रेषु गन्धमाल्यान्यावपेत् ॥ ८ ॥

**प्रसव्येन ॥ ९ ॥**

पित्र्यङ्कर्म सर्वं प्रसव्येनाप्रदक्षिणेन कार्य्यमप्रदक्षिणं कार्य्यमित्यर्थः तृतीया तु प्रकृत्यादित्वात् द्रष्टव्या। समेन धावतीतिवत्। प्रदक्षिणमुपचार इत्याभ्युदयिके अपवाददर्शनाद्योगविभागोऽवगतः ॥ ९ ॥

**इतरपाण्यङ्गुष्ठान्तरेणोपवीतित्वाद्दक्षिणेन वा सव्योपगृहीतेन पितरिदं ते अर्घ्यं पितामहेदं ते अर्घ्यं प्रपितामहेदं ते अर्घ्यमिति ॥ १० ॥**

उत्तरत्रोपवीतयेति विधानात्सर्वमिदं पित्र्यं प्राचीनावीतिना कार्य्यमित्युक्तम्। अधुना उपवीतित्वादिति हेतुनिर्देशादत आरभ्यार्वागन्धमाल्यादिदानाद्यज्ञोपवीतिना कर्म कर्त्तव्यमिति गृह्यविदः। इतरस्य सव्यस्य पाणेरङ्गुष्ठान्तरेणार्घ्यं प्रयच्छेत। उपवीतित्वाद्धेतोः। पित्रे तावत् प्राचीनावीतिना

भाव्यमयं चोपवीती तस्मादित्यर्थः । येन पाणिना कर्म करोति दक्षिणेन वा सव्येन वा तस्मिन्नंसे यज्ञोपवीते स्थिते प्राचीनावीती भवति । ततोऽन्यस्मिन्नंसे स्थिते उपवीती भवति । अत्र तूपवीतित्वात् प्राचीनावीतित्वसिद्ध्यर्थं सव्यपाणिपितृतीर्थेन दातव्यमित्यर्थः । अथवा सव्यपाणेः शिष्टगर्हितत्वाद्दक्षिणं पाणिं सव्येन पाणिना गृहीत्वा दक्षिणेनैव पाणिना उपवीत्येवार्घ्यं प्रयच्छेत् । पित्रादित्रयाणां त्रिभिर्मन्त्रैः यथाक्रमं प्रयच्छेत् ॥ १० ॥

अप्पूर्वम् ॥ ११ ॥

अर्घ्यप्रदानात् पूर्वमन्या अप्यपो दद्यादित्यर्थः ॥ ११ ॥

ताः प्रतिग्राहयिष्यन् सकृत् सकृत् स्वधा अर्घ्या इति ॥ १२ ॥

अर्घ्या इति निवेदयेदिति शेषः । ता अर्घ्या आपः प्रतिग्राहयिष्यन् प्रतिग्रहणात् पूर्वं सकृत्सकृदर्घ्या अपो निवेदयेत् । स्वधा अर्घ्या इति मन्त्रेण । पित्रर्थं यावन्तो ब्राह्मणास्तेभ्यः सर्वेभ्यः प्रथममेकमेव पात्रं सकृन्निवेदयेत् । न प्रतिब्राह्मणम् । तथा पितामहार्थानां द्वितीयं सकृदेव । प्रपितामहार्थानां तृतीयं सकृदेवेत्येवमर्थं सकृत्सकृदिति वचनम् । निवेदनस्य सकृत् नियमादन्यासामपान्दानं अर्घ्यदानञ्च अर्घ्यमन्त्राश्च प्रतिब्राह्मणमावर्त्तन्ते । निवेदनान्योदकदानार्घ्यदानेषु पदार्थानुसमयः काण्डानुसमयो वा द्रष्टव्यः । गन्धादिदाने च तथा । एवमेकैकस्यानेकपक्षे । एकैकपक्षे त्वेकैकं पात्रमेकैकस्य निवेद्यान्या अप एकैकस्य दत्त्वा अर्घ्या अप एकैकस्य दद्यात् । सर्वेषामेकपक्षे त्रीण्यपि पात्राणि तस्यैव निवेद्य

पुनः पुनरन्या अपो दत्त्वा तस्यैव तिरर्घ्यं त्रिभिर्मन्त्रैः प्रयच्छेत् ॥ १२ ॥

**प्रसृष्टा अनुमन्त्रयेत या दिव्या आपः पृथिवी सम्बभूवुर्या अन्तरिक्ष्या उत पार्थिवीर्याः। हिरण्यवर्णा यज्ञियास्ता न आपः शंस्योना भवन्त्विति संस्रवान् समवनीयताभिरद्भिः पुत्रकामो मुखमनक्ति ॥ १३ ॥**

ब्राह्मणैः प्रसृष्टा निर्णीता अर्घ्या अपोऽनुमन्त्रयेत् या दिव्या इत्यनेन मन्त्रेण। प्रसृष्टा इत्यादिकर्मणि क्तप्रत्ययः। भूतकालत्वभावे आनर्थक्यप्रसङ्गात्। तेन प्रतिब्राह्मणं पृथगनुमन्त्रणम्। अर्घ्यं दत्त्वा दत्त्वा निर्णीतास्तदानीमेवानुमन्त्रयेत्। एवं सर्वेषामर्घ्यं दत्ते संस्रवानर्घ्यशेषान् पात्रगतान् तानेकीकरोति। उत्तरे द्वे पात्रे प्रथमपात्रे आसिञ्चतीत्यर्थः। एवं गृह्यविदः। ततस्ताभिरेकीकृताभिरद्भिः पुत्रकामश्चेन्मुखमनक्ति। न चेन्नानक्ति ॥ १३ ॥

**नोद्धरेत् प्रथमं पात्रं पितॄणामर्घ्यपातितम्। आवृत्तास्तत्र तिष्ठन्ति पितरः शौनकोऽब्रवीत् ॥१४॥**

पितॄणामर्घ्यपातितं पितॄणामर्घ्यशेषा आपो यस्मिन् पात्रे एकीकृता एवम्भूतं प्रथमं पात्रं तस्माद्देशान्नोद्धरेत्। समवनयनदेशान्नापनयेदाश्राद्धपरिसमाप्तेः। किमिति नोद्धरेत्। यस्मात् तस्मिन् पात्रे पितरस्तृतीयपात्रेण पिहितास्तिष्ठन्तीति गृह्यज्ञाः। तृतीयेन पात्रेण प्रथमपात्रस्यापिधानमिच्छन्ति। अन्ये तु तत्रेति तृतीयार्थे सप्तमी। तेनायमर्थः।

चाहृत्तास्ते न प्रथमेन पात्रेण पितरस्तिष्ठन्तीति। एतदुक्तं भवति। अर्घ्यपातितं प्रथमं पात्रं न्युब्जितं कुर्य्यात्। तच्च नोद्धरेत् आसमाप्तेरिति व्याचख्युः। शौनकोऽब्रवीत् शौनक एवमवादीत् शौनकग्रहणं तस्य पूजार्थम्। न विकल्पार्थम् ॥ १४ ॥

इति चतुर्थे सप्तमी कण्डिका ॥

——

अथ अष्टमी कण्डिका ॥

**एतस्मिन् काले गन्धमाल्यधूपदीपाच्छादनानां प्रदानम् ॥ १ ॥**

आच्छादनं वस्त्रम्। इदानीं प्राचीनावीती भवेत्। ततो गन्धादीनि पञ्च ब्राह्मणेभ्यो ददाति। एतस्मिन् काल इति वचनं एतस्मिन् काले एतान्येव ददातीत्येवमर्थम्। तेन गोहिरण्यादीनां श्राद्धान्ते प्राक् स्वधावाचनात् प्रदानं कार्य्यमिति सिद्धम्।

दत्त्वा तु दक्षिणां शक्त्या स्वधाकारमुदाहरेदिति स्मृतेः ॥१॥

**उद्धृत्य घृताक्तमन्नमनुज्ञापयत्यग्नौ करिष्ये करवै करवाणीति वा ॥ २ ॥**

अनाहिताग्नेः पिण्डपितृयज्ञस्य च पार्वणस्य व्यतिषङ्गो भवति। इध्मोपसमाधानान्तं पिण्डपितृयज्ञं कृत्वा ब्राह्मणपच्छौचाद्याच्छादनान्तं पार्वणं कृत्वा ततः पिण्डपितृयज्ञस्थालीपाकादन्नमुद्धृत्य घृताक्तं कृत्वा पित्रर्थान् ब्राह्मणाननुज्ञापयति अग्नौ करिष्ये इति वा अग्नौ करवै इति वा अग्नौ करवाणीति वा ॥ २ ॥

प्रत्यभ्यनुज्ञा क्रियतां कुरुष्व कुर्विति ॥३॥

ब्राह्मणैरेवं प्रत्यभ्यनुज्ञा देया क्रियतामिति वा कुरुष्वेति वा कुरु इति वा । यथासंख्यम् ॥ ३ ॥

अथाग्नौ जुहोति यथोक्तं पुरस्तात् ॥ ४ ॥

ततो ऽग्नौ जुहोति उक्तमार्गेण मेक्षणेनावदायावदानसम्पदा जुहुयात् सोमाय पितृमते स्वधा नमोऽग्नये कव्यवाहनाय स्वधा नम इति स्वाहाकारेण वाग्निं पूर्वं यज्ञोपवीती मेक्षणमनुप्रहृत्वेति । अथशब्दो होमादर्वाचीनं पिण्डपितृयज्ञाङ्गं पूर्वं कृतमिति ज्ञापनार्थः । तेनानयोर्व्यतिषङ्गो लब्धः । अग्नौ वचनमुत्तरविवक्षार्थम् ॥ ४ ॥

अभ्यनुज्ञायां पाणिष्वेव वा ॥ ५ ॥

अभ्यनुज्ञायामिति यदि ब्राह्मणाः पाणिषु होममभ्यनुजानन्ति । अग्निकार्य्यकरत्वं यदि स्वेषामभ्युपगच्छन्तीत्यर्थः । तथा सति पाणिषु जुहोति । अनुज्ञावचनं प्रत्यभ्यनुज्ञावचनञ्च नैव स्तः । कथं तर्ह्यभ्यनुजानन्ति वा न वेति ज्ञातुं शक्यम् । उच्यते । यत्र पिण्डपितृयज्ञप्राप्तिरस्ति तत्राग्निप्राप्तिसद्भावात् पाणिहोमं नाभ्यनुजानन्ति । यत्र तु पिण्डपितृयज्ञकल्पप्राप्तिर्नास्ति तत्राग्निप्राप्त्यभावात् पाणिहोममभ्यनुजानन्ति । कथं पुनस्तत्राग्न्यभावः गृह्याणि वक्ष्याम इति हि प्रतिज्ञातम् । उच्यते । पाणिमुखाः पितर इति श्रुत्याकर्षादग्निर्निवर्त्तितः । एवञ्च कृत्वा विधिवशेन तेषामभ्यनुज्ञा विज्ञेया न तु प्रतिवचनेनेति सिद्धम् । तेनाभ्यनुज्ञायामित्यस्य पिण्डपितृयज्ञकल्पप्राप्त्यभावेनाग्न्यभाव इत्ययमर्थः । ताभ्यामेव मन्त्राभ्यां पाणिषु जुहुयात् । यावन्तो ब्राह्मणाः पित्रादित्रयार्थं उपविष्टास्तेषां सर्वेषां पाणिषु जुहोति । वचनात् । मन्त्रौ च द्वौ । तत्रार्था-

देकैकां आहुतिं विगृह्य विगृह्य सर्वेषां दक्षिणपाणिषु जुहोति। मेक्षणानुप्रहरणमर्थाल्लुप्तम्। अन्ये तु पाणिनैव जुह्वति। तत्पक्षे सुतरां लुप्तम्। अन्ये तु प्रतिब्राह्मणं द्वे द्वे आहुती ताभ्यामेव मन्त्राभ्यां जुह्वति। विग्रहविध्यभावादारम्भसामर्थ्याच्चेति। एवं पाणौ होमः। अस्मिन् पक्षे पिण्डनिपरणकाले ब्राह्मणानां समीपे पिण्डनिर्वपणं भवति। उच्छिष्टसन्निधौ पिण्डान्दद्याद्वा पितृयज्ञवदिति स्मृतिः। पाणिहोमस्य विषयमुत्तरत्र विस्तरेण विभावयिष्यामः। अनाहिताग्नेः पार्वणे अग्नौ करणमेव। न पाणिहोमः। पाणिहोमं स्तुत्वा दृढयति ॥ ५ ॥

**अग्निमुखा वै देवाः पाणिमुखाः पितर इति हि ब्राह्मणम् ॥ ६ ॥**

देवानामग्निमुखत्वादग्नौ होमः। पितृणां पाणिमुखत्वात् पाणौ होमो युक्त एवेत्यर्थः ॥ ६ ॥

**यदि पाणिष्वाचान्तेष्वन्यदन्नमनुदिशति ॥७॥**

अर्थद्वयमत्र विधातुमिष्टमिति गम्यते। तत्राग्नौ कृत्वा भोजनेषु भोजनार्थमन्यदन्नमनुदिशति ददातीत्येकोऽर्थः। यदि पाणिहोमः कृतः तदाचान्तेषु अन्यदन्नं ददातीत्यपरः। आचान्तशब्दे विप्रतिपन्नाः तत्र केचिदाहुः यदा पाणिषु होमः तदाहुतमन्नं भाजनेषु निधाय अभक्षयित्वैव निष्क्रम्याचामेयुः। आचान्तेष्वन्यदन्नं ददाति। ननु यदि भक्षणं न कृतं तर्ह्याचमने विधिर्न घटते। अशुचित्वाभावादिति चेत्। वयं पृच्छामः। कृतेऽपि भक्षणे किमित्याचमेयुः। अशुचित्वादिति चेत्। अशुचित्वेऽपि किमित्याचमेयुः। वचनादिति चेत्।

तदत्राप्यविशिष्टम्। अत्रापि हि पाणिहोमनिमित्तमाचमन-श्चोद्यते। न च सर्वमाचमनमशुचित्वनिमित्तम्। कर्माङ्गनि-मित्तकयोरपि विद्यमानत्वात्। तथाहि पिण्डदानमुक्त्वाह मनुः।

आचम्योदक् परावृत्य त्रिराचम्य शनैरसून्। इति।

नैमित्तिकञ्चेदमशुचित्वाभावात्। तद्वदिदमपि नैमित्ति-कम्। पूर्वं प्राशननिषेधश्च दृश्यते।

अन्नं पाणितले दत्तं पूर्वमश्नन्त्यबुद्धयः।

पितरस्तेन तृप्यन्ति शेषान्नं न लभन्ति ते॥

यच्च पाणितले दत्तं यच्चान्नमुपकल्पितम्।

एकीभावेन भोक्तव्यं पृथक् भावो न विद्यते॥ इति।

ननु सपिण्डीकरणे दृश्यते। हुतशेषं पितृभ्यः पाणिषु ददातीति। तस्यैवायं निषेधः। ददाति चोदितत्वात् तस्य इदन्तु जुहोति चोदितं तस्मान्नास्य निषेध इति चेत्। तत्र ब्रूमः। दत्तशब्देन विधितो यत्पाणौ निहितं अन्नन्तदुच्यते। एवमुदीच्या आहुः। भाष्यकारास्तु तन्नेच्छन्ति। चसुभक्षणे। आचान्तेष्विति भक्षितेष्वित्यर्थः। पाणिषु हुतञ्चेत्तेष्वन्नेषु प्राशितेष्वन्यदन्नं ददाति न तयोर्मिश्रीभावः कार्य्यः अथाग्नौ करणपक्षे। अग्न्यभावे तु विप्रस्य पाणावेवोपपादयेत्। यो ह्यग्निः स द्विजो विप्रैर्मन्त्रदर्शिभिरुच्यत इति हि मनुना-ग्निसाम्यं दर्शितम्। तत्र प्राशितेष्वाचमनं न कार्य्यम्। अग्नितुल्यत्वदर्शनात्। प्रयोगान्तरस्य च तद्विषयस्याविधा-नात्। केचित्त्वङ्गुष्ठनिवेशनादिप्रयोगान्तरं कुर्वन्ति तत्पक्षे आचमनं कार्य्यं न वेति चिन्त्यम्। अन्नं पाणितले दत्तमि-त्ययं निषेधः सपिण्डीकरण एव। तस्य ददाति चोदितत्वात्। अस्य न भवति जुहोति चोदितत्वात्तच्छब्दचोदितस्यैव च

तद्ग्रहणं युक्तं तस्यैव प्रथमं सम्प्रत्ययादिति। अत्र युक्तं ज्ञात्वा ]
कार्य्यम् ॥ ७ ॥

अन्नमन्ने ॥ ८ ॥

हुतशेषमन्नं भोजनार्थेषु पात्रेषु निहितेष्वन्नेषु ददाति
अग्निहोमे पाणिहोमे च समानमिदम् ॥ ८ ॥

सृष्टं दत्तमृध्नुकमिति ॥ ९ ॥

सृष्टं प्रभूतन्दत्तं ऋध्नुकं ऋद्धिकरणशीलम्। इतिशब्दो
हेत्वर्थः। तस्मात्प्रभूतमन्नं देयमिति भोजनस्य पर्य्याप्तमात्रं
न देयम्। ततोऽप्यधिकं देयं यथोच्छिष्येतेत्यर्थः ॥ ९ ॥

तृप्तान् ज्ञात्वा मधुमतीः श्रावयेदक्षन्नमी-
मदन्तेति च ॥ १० ॥

मधुवाता इति तिस्रो मधुमत्य इति प्रसिद्धाः। अन्नादि-
निवृत्तेच्छां ज्ञात्वा ततो मधुमतीति तिस्रोऽक्षन्निर्त्येकां श्राव-
येत्। तृप्तेषु श्रावयेदित्येव वक्तव्ये ज्ञात्वेति वचनं ज्ञात्वैताः
श्रावयेत् पूर्वन्तु भोजनकाले अन्याः श्रावयेदित्येवमर्थम्।
मनुनाप्युक्तम्।

स्वाध्यायं श्रावयेत्पित्र्ये धर्मशास्त्राणि चैवहि।
आख्यातानीतिहासांश्च पुराणानि खिलानि च इति ॥१०॥

सम्पन्नमिति पृष्ट्वा यद्यदन्नमुपयुक्तं तत्तत्
स्थालीपाकेन सह पिण्डार्थमुद्धृत्य शेषं निवेद-
येत् ॥ ११ ॥

अथ सम्पन्नमित्यनेन वाक्येन ब्राह्मणान् पृच्छति ते च
सम्पन्नमिति प्रत्यूचुः। ततो यद्यदन्नमुपयुक्तं तस्मात् तस्माद-

आदुद्धरन्ति पिण्डार्थम्। तत्तत् स्थालीपाकेन सहैकीकरोति अन्नप्रकीरणार्थञ्चार्थादस्मिन्नेव काले सर्वस्माद्भुक्तशेषादुद्धरति। ततो भुक्तोद्धृतशेषं निवेदयेत् ब्राह्मणेभ्यः। इदं शिष्टं किमनेन कर्त्तव्यमिति। स्थालीपाकेन सहेति नात्रापूर्वः स्थालीपाकश्चोद्यते। सर्वश्राद्धेषु प्रसङ्गात्। अनिष्टञ्चैतत्। तेनानुवाद एवायम्। तेन यत्र स्थालीपाको विहितस्तत्र तेन भुक्तशेषेण च पिण्डनिपरणं भवति। यत्र तु स्थालीपाकविधिर्नास्ति तत्र भुक्तशेषेणैव केवलेन निपरणं भवति। आचार्य्येणाष्टौ श्राद्धान्युक्तानि।

अन्वष्टक्यञ्च पूर्वेद्युर्मासि मासि च पार्वणम्।
काम्यमभ्युदयेऽष्टम्यां एकोद्दिष्टमथाष्टमम्॥

तत्र पूर्वेषु चतुर्षु स्थालीपाकादुद्धृत्याग्नौ करणम्। अग्निसमीपे स्थालीपाकेन भुक्तशेषेण च पिण्डनिपरणम्। पिण्डपितृयज्ञकल्पस्य तेषु विद्यमानत्वात्। तच्च साधितमेव प्राक्। उत्तरेषु चतुर्षु भोजनार्थादन्नादुद्धृत्य घृताक्तं कृत्वा पाणिहोमः। ब्राह्मणसमीपे भुक्तशेषमात्रेण पिण्डनिपरणम्। तेषु स्थालीपाकविध्यभावात् पिण्डपितृयज्ञकल्पप्राप्त्यभावाच्च। तत्रार्थाल्लेखा च तदभ्युक्षणं च सकृदाच्छिन्नावस्तरणं च लेखा त्रिरुदकेनेत्यादिपत्नीप्राशनान्तं भवति। अग्निं प्रत्येयादिति तु न भवति अन्यच्चातिप्रणयनादि सर्वं न भवति॥ ११॥

अभिमतेऽनुमते वा भुक्तवत्स्वनाचान्तेषु पिण्डान्निदध्यात्॥ १२॥

शेषं निवेदितं ब्राह्मणैर्यद्यभिमतं स्वीकर्त्तुं ह्यभिप्रेतं तदा तेभ्यो दद्यात्। अथ यद्यनुमतमनुज्ञातं इष्टैः सहोपभुज्यता-

मिति तदा स्वीकृत्य ज्ञातिभिर्बान्धवैश्च सहोपभुञ्जीत। मनुरपि।

ज्ञातिभ्यः सत्कृतन्दत्त्वा बान्धवानपि पूजयेत्। इति।

ततः अनाचान्तेषु पिण्डान्निदध्यात् पूर्वोक्तविधिना। अनाचान्तेषु पिण्डान्निदध्यात् पूर्वोक्तविधिना। अनाचान्तेष्वित्येव सिद्धे भुक्तवत्स्वितिवचनं भुक्तवत्स्वेव निदध्यात्। न पूर्वमित्येवमर्थम्। मनुना भोजनात् पूर्वं निपरणं विहितं तन्न कार्य्यमिति। अतो ज्ञायते। अन्यस्य मनुप्रोक्तस्याविरुद्धस्याङ्गस्येच्छातः करणमिति ॥ १२ ॥

आचान्तेष्वेके ॥ १३ ॥

आचान्तेषु निपरणमेके इच्छन्ति ॥ १३ ॥

प्रकीर्य्यान्नमुपवीयोँ स्वधोच्यतामिति विसृजेत् ॥ १४ ॥

आचमनोत्तरकालमुच्छिष्टानां समीपेषु अन्नं प्रकिरेत्। अनाचान्तेषु पिण्डदानपक्षेऽपि पिण्डन्दत्त्वा तत उच्छिष्टानां समीपे अन्नं प्रकिरेत्। मनुरपि।

सार्व्ववर्णिकमन्नाद्यमानीयाप्लाव्य वारिणा।

समुत्सृजेद्भुक्तवतामग्रतो विकिरन् भुवि ॥ इति।

अधुना प्रथमं प्राचं विहरणयात्। तत उपवीय यज्ञोपवीती भूत्वेत्यर्थः। मनुरपि।

उद्धृते दक्षिणे पाणावुपवीत्युच्यते बुधैः।

सव्ये प्राचीनमावीती निवीती कण्ठसज्जनः ॥ इति।

ततो दक्षिणां दत्त्वा, ॐ स्वधोच्यतामिति ब्राह्मणान्

विसृजेत्। अतिसृजेत्। अनुजानीयादुत्थापयेदित्यर्थः। ते च ॐ स्वधेति प्रत्यूचुः ॥ १४ ॥

## अस्तु स्वधेति वा ॥ १५ ॥

अस्तु स्वधेति वा विसृजेत्। तथा सति ते च अस्तु स्वधेति प्रत्यूचुः।

विसृज्य ब्राह्मणांस्तांस्तु नियतो वाग्यतः शुचिः।
दक्षिणान्दिशमाकाङ्क्षन्याचेतेमान्वरान् पितॄन् ॥
दातारो नोऽभिवर्द्धन्तां वेदाः सन्ततिरेव च।
श्रद्धा च नो मा व्यगमद्बहुधेयञ्च नोऽस्त्विति ॥
उच्छेषणन्तु तत्तिष्ठेद्यावद्विप्रा विसर्जिताः।
ततो गृहबलिं दद्यादिति धर्मो व्यवस्थितः ॥ इति मनुः।

अष्टौ श्राद्धानीत्युक्तम्। तत्रान्वष्टक्यञ्च पूर्वेद्युश्च मासि मासि चेति श्राद्धत्रयं द्वितीयेऽध्याये व्यक्तीकृतम्। पार्वणञ्चानाहितमग्नेर्व्यक्तीकृतमेव। आहिताग्निस्तु पिण्डपितृयज्ञं समाप्य ततः पार्वणं करोति। पितृयज्ञन्तु निर्वर्त्येति मनुः। तत्र पाणिहोमः। ब्राह्मणसमीपे भुक्तशेषमात्रेण पिण्डदानञ्च। काम्ये च पाणिहोमः। भुक्तशेषमात्रेण पिण्डदानञ्चास्त्येव। मासिश्राद्धस्य पार्वणस्य च एककार्य्यत्वादन्यतरेणैवालमित्युक्तम्। तत्र मासिश्राद्धं कृतवांश्चेत्पर्वणि केवलं पिण्डपितृयज्ञः कार्य्य एव। काम्यश्राद्धं कृतश्चेत्तेनैवालं न पुनर्मासिश्राद्धपार्वणश्राद्धे कार्य्ये। काम्यश्रुतिस्तु तिथिविशेषमपेक्ष्य चारितार्थो न पुनरावर्त्तयितुं शक्नोति। अग्निहोत्रद्रव्यवत्। आभ्युदयिके तु युग्मा ब्राह्मणा समूला दर्भाः। प्राक्संस्थोपवीती स्यात् प्रदक्षिणमुपचारो यवैस्तिलार्थो गन्धादिदानं द्विर्द्विः ऋजुदर्भानासने दद्यात्। यवोऽसि सोमदेवत्यो

गोसवे देवनिर्मितः। प्रत्नवद्भिः प्रत्तः पुष्या नान्दीमुखान् पितृनिमांल्लोकान् प्रीणयाहि नः स्वाहेति यवावपनम्। नान्दीमुखाः पितरः प्रीयन्तामित्यर्घ्यनिवेदनं यथालिङ्गं नान्दीमुखाः पितरः इदं वः अर्घ्यमित्यर्घ्यप्रदानं मन्त्रो यथालिङ्गम्। अग्नये कव्यवाहनाय स्वाहा। सोमाय पितृमते स्वाहेति होममन्त्रौ। मधुवाता इति तृचस्य स्थाने उपास्मै गायतेति पञ्च मधुमतीः श्रावयेत्। अक्षन्नमीमदन्तेति षष्ठीम्। आचान्तेषु भुक्ताग्रयान् गोमयेनोपलिप्य तेषु प्राचीनाग्रान् दर्भानास्तीर्य्य तेषु पृषदाज्यमिश्रेषु भुक्ताग्रेष्वेकैकस्य द्वौ द्वौ पिण्डौ दद्यात्तेनैव क्रमेण मन्त्रावृत्तिकृत्वा। अन्ये तु नान्दीमुखेभ्यः पितृभ्यः स्वाहेति एवं यथालिङ्गं पिण्डान्निपृणन्ति। सर्पिषि दध्यानयति एतदेवं पृषदाज्यं अनुमन्त्रणादि पूर्ववत्। अन्ये त्वनुमन्त्रणादि नेच्छन्ति। ॐ स्वधोच्यतामित्यस्य स्थाने उपसम्पन्नमिति शेषं पूर्ववत्। अष्टमीश्राद्धं काम्यवत्। एकोद्दिष्टे त्वेको विप्र एकमर्घ्यपात्रं न दैवं न धूपो न दीपो न स्वधाशब्दो न पितृशब्दो न नमःशब्दः तिलोऽसीति मन्त्रस्योहः तूष्णीं वा तिलावपनं अर्घ्यं निवेदनं तूष्णीं अर्घं दत्त्वं तत्पात्रं न्युब्जं करोति। भोजनार्थादन्नादुद्धृत्य घृताक्तं कृत्वा अमुष्मै स्वाहेति पाणिहोमः। अमुष्मैशब्दस्य स्थाने प्रेतनाम वाच्यम्। नाभिश्रावणं भुक्तशेषमात्रेणैकं पिण्डन्निपृणीयात्। तस्य गोत्रं नाम गृहीत्वा निनयनमन्त्रस्योहः। अनुमन्त्रणादि सर्वं समन्त्रकं भवति पत्नीप्राशनन्तु नास्ति। अभिरम्यतामिति विसर्जनं एव नवश्राद्धवर्जितेषु एकोद्दिष्टेषु। नवश्राद्धेषु तु एकोद्दिष्टेषु सर्वममन्त्रकं भवति। नवश्राद्धममन्त्रकमिति वचनात्। दिग्राहेषु यानि श्राद्धानि तानि नवश्राद्धानि। नवश्राद्धं दशाहानीति वचनात्। यत्र यत्रास्माभिः पाणिहोम

ष्ट्राविस्तुरादि च प्रसूयन्ते हीनाङ्गान्यधिकाङ्गानि विकृतानि रूपाणि जायन्त इत्येवमादीनि तान्येतानि सर्वाणि रुद्रदैवत्यान्यद्भुतानि प्रायश्चित्तानि भवन्ति इमा रुद्राय स्थिरधन्वने गिर इति स्थालीपाकमष्टशतं हुत्वा पञ्चभिराज्याहुतिभिरभिजुहोति रुद्राय स्वाहा उमापतये स्वाहा त्रिशूलपाणये स्वाहा ईश्वराय स्वाहा सर्वोत्पातशमनाय स्वाहेति महाव्याहृतिभिश्च हुत्वा शन्तातीयं जपेत् ॥ २० ॥

स सर्वा दिशोऽन्वावर्त्ततेऽथ यदास्यायुक्तानि यानानि प्रवर्त्तन्ते, देवतायतनानि कम्पन्ति देवताप्रतिमा हसन्ति गायन्ति नृत्यन्ति खिद्यन्ति भिद्यन्ति रुदन्त्युन्मीलयन्ति निमीलयन्ति प्रतियान्ति नद्यस्कन्धमादित्यो दृश्यते विदले च परिवेषो दृश्यते केतुकुम्भमुपानच्छत्रं वज्रदन्तमुसलानि प्रज्वलन्तीत्यश्वानां वालैरभिरवरङ्गाः चरन्ति छतानि कर्माणि कुर्वन्ति इत्येवमादीनि तान्येतानि सर्वाणि विष्णुदैवत्यान्यद्भुतानि प्रायश्चित्तानि भवन्ति इदं विष्णुर्विचक्रम इति स्थालीपाकमष्टशतं हुत्वा पञ्चभिराज्याहुतिभिरभिजुहोति विष्णवे स्वाहा महाभूताधिपतये स्वाहा चक्रपाणये स्वाहा ईश्वराय स्वाहा सर्वोत्पातोपशमनाय स्वाहेति महाव्याहृतिभिश्च हुत्वा शन्तातीयं जपेत् ॥ २१ ॥

अग्निकार्य्यमासमरात्रं कुर्य्याद्यदेतन्न क्रियते पुत्रो म्रियते पौत्रो म्रियते धनमात्मानञ्च निवेशयति सुवर्णगोर्वासो हिरण्यं दक्षिणां दत्त्वा ब्राह्मणान् भोजयित्वा स्वस्त्ययनं वाचयीत नमः आचार्य्येभ्यो नमः प्राचार्य्येभ्यो नमः शौनकाय नमः शौनकाय ॥ २२ ॥

इत्याश्वलायनगृह्यपरिशिष्टे चतुर्थोऽध्यायः ।

आश्वलायनगृह्यपरिशिष्टं समाप्तम् ।